दिनस्याद्यन्तयोरेवं दीपं मज्ज्वालयेद् गृहे ।
फाल्गुणे मासि माघे च पौर्णमास्यामुपस्यपि ।
विशुद्धवलिगन्धाद्यैरर्चयेद् गृहदेवताम् ॥ ११५ ॥
गृहागताश्च सम्पूज्या ब्राह्मणातिथिबान्धवाः ।
गृहमेधीति कुर्व्वाणः श्रियं निसमवाप्नुयात् ॥ ११६ ॥
पूषा पुष्यपुनर्व्वसू वसुहरी चित्रा शशी रोहिणी
तारास्तास्तिथयोऽशुभत्फणिमया दिक्पञ्चदश्यो हरा ।
वाराश्चन्द्रसुतेन्दुशुक्रगुरवो युग्मं कुलीरो धनुः
कुम्भान्तावपि राशयो निगदिता गव्यं प्रयोगायते ॥ ११७ ॥
चन्द्राश्चाश्लेषयाश्लिष्ट कृष्णपक्षे चतुर्दशी ।
भुजङ्गांशोदयः कैश्चिन्नागयोग इतीष्यते ॥ ११८ ॥
पृकृय शिरःपञ्चसरोजपत्रं निच्छिद्रमेकीकृतवद्धनालम् ।
गव्यं प्रपूर्ण निखनेदनन्तर्सूपा तदा क्षुद्रविनाशिगेहे ॥ ११९ ॥
मूत्रं द्विभागं शकृदेकभागं पयोऽष्टभागं दधि तत्समानम् ।
क्षीरार्द्धकं वा चतुरंशमाज्यं गव्यानि सर्व्वाणि समानि वास्युः १२०
गव्येक्षुशालीयवमुद्गमास गोधूमविल्वास्थितिलाब्जवीजम् ।
पद्मच्छदस्थं विनिधाय ताम्रे क्षुद्रानिखन्याद् भुवि नागयोगे १२१

इतिप्रवेशविधानम् ।

---

पनसस्तिन्दुको निम्बःस्यन्दनश्चन्दनोऽर्जुनः ।
शिंशपाशालकाः स्मर्य्याः सुरदारुश्च शोभनः ॥ १२२ ॥
सर्व्वे ते तरवःशस्ता ये च स्वादुफलोद्गमाः ।
गजाः संनिहताश्चैतश्मशानपथगान्विताः ॥ १२३
नान्यं संयोगमिच्छन्ति तिन्दुकी [illegible]
केवलःस्पन्दनो नेष्टो [illegible]

शितांशुङ्गुलम्भवेद्राज्ञां शयनं विजयप्रदम् ।
नवतिश्च सङ्काद्विस्त्रीः षडूनशयनासनम् ।
क्रमेण युवराट् मन्त्री बलनेत्रपुरोधसाम् ॥ १२५ ॥
भोक्तुश्च पादवैकल्यमेकास्मिन् निम्नमस्तके ।
द्वयोर्ने जीर्य्यते चान्नं त्रिचतुर्षु वधागमः ॥ १२६ ॥
द्रुमेणकेन शस्तः स्याद् द्वाभ्यां शस्ततरस्तथा ।
त्रिभिरात्मजवृद्धिःस्याच्चतुर्भिश्च यशोधनः ॥ १२७ ॥
पञ्चभिःपञ्चतां याति षट् सप्ताष्टमहीरुहैः ।
जायते वंशविच्छेदः घटिते शयनासने ॥ १२८ ॥
त्रिवितस्तिस्तु विस्तारो मध्यमस्त्र्यङ्गुलोत्तरः ।
वरिष्ठःशयनस्योक्तो दैर्घ पञ्चवितस्तिकम् ॥ १२९ ॥
मध्यमं तद्वरिष्ठं स्यात् पुनःपञ्चाङ्गुलोत्तरम् ।
सर्व्वीयशयने ज्ञेयाविवमायामविस्तरौ ॥ १३० ॥
पादोत्सेधो वरिष्ठःस्यादर्द्धोत्तरवितस्तिकः ।
तदर्द्धार्द्धापहारेण मध्यमश्चाधमो मतः ॥ १३१ ॥
स्वोच्चो यस्य चतुर्थांशः पञ्चमो वास्य विस्तरः ।
एवं शयनपादे स्याद्विस्तारायामलक्षणम् ॥ १३२ ॥
कुलज्येष्ठाश्च ये पूज्या जातिविद्यावयोऽधिकाः ।
तेषामभिमुखेनैव सेवेत शयनासनम् ॥ १३३ ॥

इतिशयनाशनविधिः ।



यत्काकपादकलुषोचरर्गकरापु—
विद्ध शीर्णमथवा द्विगुणाश्रियुक्तम् ।

१ जीर्य्यते चान्नम् ।

अन्तर्निगूढमलिना क्षतिकेशधातु—
युक्तं समस्तजनदुःखवधाय रत्नम् ॥ १३४ ॥
यत् स्निग्धमम्भसि क्षिप्तं लघुमतरनिश्चयम् ।
अदृष्टं विद्दतं वज्रमवशारिपापदम् ॥ १३५ ॥
वज्रं न किञ्चिदपि धारयितव्यमेव
पुत्रार्थिनीभिरबलाभिरुपन्ति तज्ज्ञाः ।
शृङ्गाटकत्रिपुटधान्यकवास्थितं यत्
श्रोणीनिभञ्च शुभदं तनयार्थिनीनाम् ॥ १३६ ॥
एकावली नाम यथेष्टसंख्या
हस्तप्रमाणा मणिविप्रयुक्ता ।
संयोजिता वा मणिना तु मध्ये
सा यष्टिरुक्ता सकलेन भोज्या ॥ १३७ ॥
निवृत्तस्य हि विप्रस्य नेष्टमाभरणं सदा ।
यज्ञकुण्डलतःशेषं शेषस्य सकलं शुभम् ॥ १३८ ॥
चतुर्वर्गविधानेन भूषणं मुकुटादिकम् ।
नामजन्मर्क्षयोरिष्टं धारयेद्धरणीपतिः ॥ १३९ ॥
सौभाग्यं वकुलेऽथवापि ककुभे सर्ज्जे च कुन्दे यशः ।
पाटल्यां समितं जने च पटुतामाधुर्य्यमाम्लातके ।
निर्गुण्ड्यामपि रोगशोकहरणं जम्वाम्रयोःपाटवम्
पुन्नागे विजयो जयश्च तिलके नागे तथोदुम्वरे ॥ १४० ॥
उदङ्मुखं प्राङ्मुख एव वासौ जोपं यथेष्टं विनिमार्ज्य दन्तान् ।
जलाजलौ शीतगुमण्डलस्थं ध्यात्वा जपित्वा च तुरीयमुच्चैः १४१
प्रक्षाल्य वक्त्रं विधिवद्विधिज्ञो ध्यात्वाथ देवं व्यनुलिप्य तैलैः ।
देहन्ततो जप्तशुभञ्जनेन व्यभ्यञ्ज्य नेत्रं सकलं प्रियं स्यात् १४२
तुल्यस्त्रियोगं प्रकरोऽतिरागं रागक्षयं पूगफलातिरिक्तः ।
चूर्णाधिको वक्त्रविकारगन्धिःपत्राधिकःसाधु करोति गन्धम्॥१४३

ौहे पात्रे तण्डुलान् कोद्रवाणां शुक्तौ पक्का लोहचूर्णेन सार्द्धम्।
लेपयित्वा रूक्षे गृध्रि शुक्याम्बु केशे दत्वा तिष्ठेद् वेष्टयित्वार्द्रपत्रैः १४४
ाते तृतीये प्रहरे विहाय दद्याच्छिरस्यामलकप्रलेपम् ।
च्छाद्य पत्रैःप्रहरद्वयेन प्रक्षालनं कार्ष्ण्यमुपैति शीर्षम् ॥१४५॥
श्चाच्छिरःस्नानसुगन्धितैलैर्ल्लोहाम्लगन्धान् शिरसोपनीय ।
हृद्यैश्च गन्धैर्विविधैश्च धूपैः सनिर्विशेद्राज्यसुखं प्रियाभिः॥१४६॥

इति भूषणविधिः ।

———ooo———

विरक्तचेष्टा भ्रुकुटी मुखत्वं पराङ्मुखत्वं कृतविस्मृतिश्च ।
असम्भ्रमो दुष्परितोषताच तादिष्टमैत्री परुषश्च वाक्यम् ॥१४७॥
सुस्पृष्टमालोक्य दुनोति गात्रं करोति गर्व्वं न रुणद्धि यान्तम् ।
चुम्बादिरामे वदनप्रमार्ष्टिः पश्चात्समुत्तिष्ठति पूर्व्वसुप्ता ॥१४८॥
इमास्तु विद्यादनुरक्तचेष्टा प्रियाणि ब्रूते च धनं ददाति ।
विलोक्य संहृष्यति वीतरोषः प्रमार्ष्टि दोषान् गुणकीर्त्तनेन ॥१४९
तन्मित्रपूजा तदरिष्टमैत्री कृतस्मृतिःप्रोषितदर्शनस्पृह् ।
स्तनौष्ठदन्तैरुपगूहनश्च स्वेदोऽथ कम्पम्प्रथमाभियोगे ॥ १५० ॥
यस्यामनूनामनुरक्तचेष्टां निरीक्षते तत्र रमेत धीमान् ।
सा चेद पराधीनवधूर्न तत्र रमेत लोकद्वयवृद्धिमिच्छन् ॥१५१॥

इति स्त्रीविधानम् ।

———o———

मध्येऽष्टाङ्गुलीविस्तीर्णं पट्टं राज्ञ शुभावहम् ।
महिष्याःसप्तविस्तीर्णं युवराजस्य षडङ्गुलम् ॥ १५२ ॥
चतुरङ्गुलविस्तीर्णं पट्टं सेनापतेर्भवेत् ।
द्वाभ्यां प्रसादपट्टं स्यात् पट्टं पञ्चविधोदितम् ॥ १५३ ॥

---

१ स्थानाष्टद्न्तैः । २ लोकद्वयवृद्धिमिच्छन् ।

स्वमध्यद्विगुणा यामाः सर्व्वे ते हेमनिर्म्मिताः ।
मुखे विस्तीर्य्यमानास्ते क्रियमाणेषु शोभनाः ॥ १६४ ॥
राज्ञःपञ्चशिखं पट्टं त्रिशिखं पुत्रभार्य्ययोः ।
सेनापतेरेकशिखं शिखाविरहितोऽपरम् ॥ १५५ ॥
अङ्कःसमाङ्गुलं प्राप्तो हर्त्ता जीवितराज्ययोः ।
मध्ये विष्फुटितस्त्याज्यः पार्श्वे विष्फुटितस्तथा ॥ १६६ ॥
यवमानेन पट्टेषु चतुर्वर्गविधिं जगुः ।
सम्भोक्तुरनुकूलोऽयं पट्टो विजयवर्द्धनः ॥ १६७ ॥

इति पट्टविधिः ।

———o———

पञ्चादशाङ्गुलमितः प्रवरः कृपाणः ।
प्रोक्तः पुराणनिपुणैरधमस्तदर्द्धम् ।
अङ्कःसमाङ्गुलगतः शुभरूपकश्चे
दिष्टाहवोऽस्त्वत रथा विपदं विधत्ते ॥ १६८ ॥
क्वणिते मरणं काण्डे पराजयश्चापवर्त्तिते कोशात् ।
स्वयमुद्‌गीर्णे युद्धः ज्वलिते विजयो भवेत् खड्गे ॥१६९॥
नाकारणेन व्रणयन्न वदेच्च मूल्यं
पश्येन्न तत्र वदनं न विघट्टयेच्च ।
देशेन तस्य कथयेन्मतिमानयेच्च
नैव स्पृशेन्नृपतिरप्रियतोऽसि यष्टिम् ॥ १६० ।

इति खड्गविधिः ।

———ooo———

इत्युपभोगदशाविधानं नाम

———o

## अष्टाविंशोऽध्यायः ।

—.o.—

वक्ष्याम्यतः परमहं लघुना क्रमेण
स्पष्टान्वयैरुपचयार्हदशाविधानम् ।
भूमिप्रवेशकृपिकर्म्मविशिष्टवस्तु
बीजाप्तिमज्जनहवर्णिमप्ररणानि तत्र ॥ १ ॥
प्रविश्य विधिवत्पूर्व्वं विदधीत कृषिं ततः ।
उत्तरत्रयमार्द्रा च चित्रा याम्यश्च मित्रभम् ॥ २ ॥
स्वातिर्मघानुराधे च पुष्यं शस्तं प्रवेशने
विदोषास्तिथयः शस्ताः श्रेष्ठं भौमदिनं तथा ॥ ३ ॥
केश्चिच्चन्द्रदिनम्प्रोक्तं बुधजीवौ तु मध्यमौ ।
गोकुलीरालिकन्यानामुदयांशाः शुभाःस्मृताः ।

इति प्रवेशविधिः ।

—o—

रेवतीपुष्यहस्ताश्च रोहिणी चोत्तरत्रयम् ।
अदितिर्मूलमित्येतद् विशिष्टे कृपिकर्म्मणि ॥ ४ ॥
राधानुराधा स्वातिश्च पिष्णुःपैत्रं त्रिपूर्व्वकम् ।
चित्राश्विनीतिचैत्राणि परे प्राहुःकृषिक्रिये ॥ ५ ॥
शुक्रार्केन्दुजीवानां वारवर्गोदयाः शुभाः ।
विदोषास्तिथयःसर्व्वाः कृपिकर्म्मणि पूजिताः ॥ ६ ॥
मृगो मीनःकुलीरश्च मिथुनं वृषभोदयः ।
श्रेष्ठो धनुस्तुला कन्या मध्यमा कृपिकर्म्मणि ॥ ७ ॥

---

१ स्पष्टान्वयैः । * प्रतिमानयेच्च ।

आर्तमायजलोत्सर्गे शस्तं मूलादिभत्रयम् ।
कौश्चिच्छ्रवणनक्षत्रं पूषा च परिकीर्त्तिता ॥ ८ ॥
क्षीरान्नं मधुना भुक्त्वा शुचिःप्रयतमानसः ।
शुभेन वृषयुग्मेन क्षेत्रंसम्प्राप्य कर्षकः ।
अर्चयेद् वलिदानेन तस्यां सायं दिनेश्वरम् ॥ ९ ॥
उदङ्मुखः प्राङ्मुख एव वासौ कृषीवलः शस्तहलंगृहीत्वा ।
कुर्य्यात् कृषिं तस्य हलस्य रेखास्तिस्रो यथा सुमकटी भवन्ति॥१०
वलिभुक् वलिमादाय यदि गच्छेत् महादिशम् ।
प्रशस्तः कोणदिग्यातः सस्यहानिप्रकाशकः ॥ ११ ॥
वहवो वायसास्तत्र सूचयन्ति महाभयम् ।
न कश्चिद्यदि गृह्णाति* द्विजातिर्वा भयंतथा ॥ १२ ॥
हलभङ्गे कुलेक्षोभः शीर्षभङ्गे स्त्रियो वधः ।
युगस्य भङ्गे जानीयाद् दुरितं गृहमेधिनः ॥ १३ ॥
फालस्य भङ्गे दुहितुः सूनोर्गोत्रस्य पीडनम् ।
वृषपादस्य भङ्गे तु स्वकुलक्षयमादिशेत् ।
विधिना श्रुतिदिष्टेन शमयेत् पौष्टिकेन तत् ॥ १४ ॥
वहुलाभङ्गते भौमवारे कुर्य्याद्विशेषतः ।
वनानां छेदनैश्चय दाहकर्म्म च तत्र हि ॥ १५ ॥
फलपल्लवपुष्पाढ्यान् वनस्पतिमहीरुहान् ।
विद्यात् सस्यादिपौष्कल्यान् हानिञ्च विपरीततः ॥१६॥
रक्तशालिरशोकेन शालिः कलमशालयः ।
यवको वटवृक्षेण तिन्दुकेन च पष्टिकाः ॥ १७ ॥
अश्वत्थेन च निष्पत्तिः सर्व्वमस्यस्य निश्चिना ।
जम्बुभिस्तिलमापाश्च यवाः मम्रदल्केन च ॥ १८ ॥

* विज्ञातिर्वा । १ कुलक्षोभः । २ गानाङ्कुरमच्येव ।

मुद्गाःशिरीषवृक्षेण गोधूमाश्च मधूकतः ।
अतिमुक्तककुन्दाभ्यां कार्पासस्य च सम्पदः ॥ १९ ॥
अशनैः सर्षपा ज्ञेयाः कुलत्था बदरीद्रुमैः ।
मुद्गाश्च चिरबिल्वेन वेतसैस्तसीश्रियः ॥ २० ॥
कोद्रवाश्च पलाशेन पणस्थादिग्भेदुर्दैः ।
मुक्तारजतशङ्खानां समृद्धिस्तिलकेन च ॥ २१ ॥
कारिणो हस्तिकर्णेन वाजिकर्णेन वाजिनः ।
गोजातिः पाटलीभिःस्यात् कदलीभिरजाविकाम् ॥२२॥
मवाल्या वन्धुजीवेन कनकानि च चम्पकैः ।
वैदूर्यं नन्दियावर्त्ते वज्रकुरवकेन च ॥ २३ ॥
तालकश्च कुशुम्भेन सिन्दुवारेण मौक्तिका ।
रक्तोत्पलेन राजानो मन्त्री नीलोत्पलेन च ॥ २४ ॥
श्रेष्ठी सुवर्णपुष्पेन कुमुदेन पुरोहितः ।
सौगन्धिकेन सन्येशः स्वर्णमर्केन वर्द्धते ॥ २५ ॥
क्षेमपाम्रद्रुमैर्विद्याद्भयं भल्लातकैर्भवेत् ।
आरोग्यं पीलुभिर्ज्ञेयं सुदृष्टिःककुभेन च ॥ २६ ॥
दुर्भिक्षमनुमेर्व स्यात् शमीखदिरसम्पदः ।
पिचुमन्दश्च नागश्च सुभिक्षान् जगतां वदेत् ॥ २७ ॥
मरुत्कोपः कपित्थेन व्याधयः कुटजेन च ।
अनावृष्टिश्च निचुलैः समरःशालमल्लीद्रुमैः ॥ २८ ॥
इक्षवः कुशदुर्वाभ्यां कोविदारेण चित्रकम् ।
श्यामा लतानां सम्पत्ता बन्धुकीनां विटङ्कयः ॥ २९ ॥

इति विशिष्टवस्तुविधिः ।

---

१ अतिमुक्तक । २ कतकानि । ३ कालकश्चकुम्भेन । ४ वर्द्धते ।

एवं वर्द्धनशीलानि बीजानि सुपरीक्ष्य च ।
उक्तिमारभते विद्वान् शास्त्रोक्तविधिनामुना ॥ ३० ॥
मासस्त्वापाढसंज्ञश्च ज्येष्ठं मूलञ्च सम्मतः ।
कालो भौमार्चवस्येति वापस्तत्र प्रशस्यते ॥ ३१ ॥
चापः प्रशस्ततारायैः कलिकारसमर्दितम् ।
बीजमङ्कुरयेद्गेहे प्राक्सप्ताष्टनवाहतः ॥ ३२ ॥
मूलं मैत्रं मघा हस्तः पौष्णसर्पोत्तरत्रयम् ।
प्रजापत्यञ्च पुष्यञ्च स्वातिश्रवणवारुणे ॥ ३३ ॥
बीजकर्म्माणि शस्तानि नक्षत्राणि चतुर्दश ।
आद्रादित्याश्विवस्विन्दुतारका मध्यमाःस्मृताः ॥ ३४ ॥
पञ्चमी सप्तमी चैव पौर्णमासी त्रयोदशी ।
तृतीयैकादशी चैव प्रशस्ता बीजकर्म्मणि ॥ ३५ ॥
द्वितीया दशमी षष्ठी मध्यमेति प्रकीर्त्तिता ।
विष्टिवर्ज्यानि शस्तानि चराणि करणाणि षट् ॥ ३६ ॥
*गोसिंहकर्किमीनाश्च मकरश्चैव पूजिताः ।
†यमकुम्भतुला मध्याः शेषाः सर्व्वे विगर्हिताः ॥ ३७ ॥
शुक्रेन्दुजीवसौम्यानां प्रशस्ता दिवसादयः ।
षष्ठायभातृगाःपापाः श्रेष्ठाःशेषेषु वर्ज्जिताः ।
शशिबन्ध्वर्थपुत्रस्त्रीभातृकर्म्मायगाःशुभाः ॥ ३८ ॥
अष्टमस्थाःग्रहा नेष्टाः शुक्रो नेष्टश्च सप्तमे ।
विनिन्दिताःशुभाःषष्ठे कालकर्णीकिलस्तथा ॥ ३९ ॥
वपनं यत्र तारायां बीजं नेयं हि तादृशम् ।
प्राङ्मुखाः कृत्तिकाद्यास्तु मघाद्या दक्षिणामुखाः ।
पश्चान्मुखाश्च चैत्राद्या वस्वाद्यास्तूत्त

* गोनृयुकार्कि । † हरि । १

पारियो नाम दण्डोऽस्ति वायुवह्निसमश्च यः ।
न गच्छेत्तमतिक्रम्य बीजकर्म्मणि बुद्धिमान् ।
तस्मात्तत्तन्मुखारम्भं कृष्याद्यारम्भमाचरेत् ॥ ४१ ॥
वामकर्णविभिन्नौ द्वौ थान्तौ नक्रयुतायुतौ ।
श्येनश्वानौ च न शान्तौ बीजानां वपने विदुः ॥ ४२ ॥
शकुनाः सुस्वरा वामे बीजनिर्गमने शुभाः ।
ब्राह्मे मुहूर्त्ते सर्व्वेषां सस्यानां वापनं हितम् ।
मुहूर्त्ते वाभिजित्ख्याते वृक्षरोपणमुत्तमम् ॥ ४३ ॥
शुक्लपक्षे तु पञ्चम्यां चन्द्रे पुष्यमुपागते ।
मुहूर्त्ते वाभिजित्ख्याते वपनं रोपणं हितम् ॥ ४४ ॥
मूलप्रधानं दिवसे खरांशोः स्कन्धप्रधानं शशिनश्च वारे ।
पत्रप्रधानं कुजकोणयोश्च पुष्पप्रधानं बुधवासरे च ॥ ४५ ॥
फलप्रधानं सितजीवयोश्च सारप्रधानं गुरुवासरे च ।
वक्रूपेदालं मन्ददिने विदध्याद् वृन्तप्रधानं* शशिवासरे च॥४६॥
अर्कोदये सूर्य्यवारे सस्यबीजानि वापयेत् ।
मन्दस्य वारे मध्याह्ने कृष्णधान्यानि वापयेत् ॥ ४७ ॥
भौमस्य वारे तल्लग्ने कोद्रवान् वापयेद् बुधः ।
शुक्रस्य वारे तल्लग्ने वापयेत् कौसुमांस्तरून् ॥ ४८ ॥
अश्विनी मधुकेक्षूणामिक्षूणामदितिस्तथा ।
रोहिणी वृक्षजातीनां वृक्षसाः भरणी तथा ॥ ४९ ॥
हस्तोरगे नागवल्ल्याः पुष्पं पुष्पमहीरुहाम् ।
मघा च तृणपूर्व्वाणामुत्पले चोत्तरत्रयम् ॥ ५० ॥
मुद्गानां त्वाष्ट्रभं श्रेष्ठं सस्यबीजप्रभञ्जनः ।
राधा माङ्कुरसस्यानामनुराधा च शालिषु ॥ ५१ ॥

१ विदन्तौ । २ थान्तौनयुतायुतौ । ३ श्येनाश्वाश्वस्यान्तौ । ४ मधु ।
* बुधवासरे ।

मूलं मलयत्रल्लयस्तु कृष्णधान्ये च वारुणम् ।
रेवती सर्व्वशालीनां रोपणे मुनिभिर्मताः ॥ ५२ ॥
राधानुराधा मूलञ्च हस्तश्चित्रेति पञ्चकम् ।
चन्द्रशुक्रसमायोगे ताम्बूली रोपणे हितम् ॥ ५३ ॥
ब्रह्माद्यास्तारकावाष्टौ हस्तं पुष्याश्विनी तथा ।
चन्द्रशुक्रसमायोगे[2] इक्षुरोपे शुभावहम् ॥ ५४ ॥
उत्तरत्रयमादित्यपितृचित्रार्कयोनयः ।
ब्रह्मविष्णुमृगा मूलं हितमुत्पलरोपणे ॥ ५५ ॥
उत्तरत्रयविश्वान्ससर्पमूलानि धीधनैः ।
अङ्कुरीभूतसस्यानां प्रशस्तानि हि रोपणे ॥५६॥
मन्दवारे च विश्वर्क्षे लग्ने सूर्य्यसुतस्य च ।
सस्यरक्षाविधानार्थमुटजं कारयेद् बुधः ॥ ५७ ॥
सिंहोदये शनेर्वारे याम्यं नक्षत्रसङ्गते ।
प्रतिमां स्थापयेत् क्षेत्रे पशूनां शस्यविद्विषाम् ॥ ५८ ॥

स्वस्ति किष्कन्धाधिपप्रकटपराक्रमाविष्कारादिङ्मण्डलोपजीवितः श्रीहनुमानाज्ञापयति मूषिकपतङ्गपिपीलिकशरभसारम्भङ्गमृगमेतीकीटाद्यैर्नस्थातव्यमाज्ञामतिक्रम्यमानस्य शरीरं निग्रहं समावर्त्तयते तस्य वानरसिंहस्याक्रममानस्य सागरं कक्षारं तरङ्गतो वायुर्जीमूत इव गर्ज्जति हुं फट्नमः ॥

मन्त्रं पत्रे समालिख्य जप्त्वा सन्निखने तदा ।
भुवि कीटप्लवङ्गाखुपिपील्यादिर्विनश्यति ॥ ५९ ॥
समभ्यञ्ज्य महातैलैः सर्पत्वन्मयवर्त्तिकाम् ।
नयेत् प्रदीपं यामेन सस्यकीटास्त्वजन्ति तत् ॥ ६० ॥
विलिख्य तुम्बुरो बीजमिष्टिकायां विचक्षणः ।

१ यथायोगे। २ समायोगादिक्षुरोपे।

स्फुटयेदग्निचक्रेण वारि मार्गेषु तद खनेव ।
एनेन सस्यकीटास्तु व्यपयान्ति ततो वहिः ॥ ६१ ॥
आर्द्रं चटकतैलेन निर्म्मोकं जुहुयात्ततः ।
ऊर्ध्वमारुतधूपेन यान्ति सस्य*द्रुहस्ततः ॥ ६२ ॥
श्वभ्रेऽग्निदग्धे सम्पूर्य्य सार्द्धमंकोलचूर्णकैः ।
शुष्कगोमयचूर्णानि तत्र भेञ्जनपेशिनाम् ॥ ६३ ॥
सूत्रेण गाढमावेष्ट्य निहितः रोहितोदरे ।
पुष्येण रोपयेद् वृक्षं सन्ततं स्वादुशाकदम् ॥ ६४ ॥
इदमेव विधानं हि वृहत्सादौ विधीयताम् ।
ततो भवन्ति स्वादूनि मधुराणि फलानि च ॥ ६५ ॥

इति वापविधिः ।

———o———

शतर्क्षविश्वार्य्यममर्प्परुद्र-
स्वासर्कपौष्णेषु दिने शुभानाम् ।
लग्ने कुलीरेऽलिनि वा सुरेज्ये
चतुर्थगे लावनकर्म्म कुर्य्यात् ॥ ६६ ॥
द्वितीयं क्षेत्रपालेभ्यो दधि कं बलिमादितः ।
पद्मपत्रगतं पञ्चगव्यञ्च निखनेत्खले ॥ ६७ ॥
विष्णुराधाग्निनयम्यानामिद्राकेषु यथाक्रमम् ।
कर्कटे वाथ कीटे वा विदुध्याद्धान्यमङ्कदम ॥ ६८ ॥
अच्छिद्रास्तिथयः शस्ताः सौम्यवारोदयादयः ।
त्रिषडायगताः पापाः शुभाः केन्द्रत्रिकोणगाः ॥ ६९ ॥
वारः शनेर्वा भानोर्वा प्रतिपद्वा चतुर्दशी ।

---

१ भञ्जकपेशिताम् ।   * मृगस्तया ॥

स्वातिर्वा रोहिणी वाथ लग्नं जीवस्य वा रवेः ।
योगोऽप्युत्तमर्णाय व्ययाय च सुशोभनः ॥ ७० ॥

इति सङ्ग्रहविधिः ।



गृहीत्वा मेषगे भानौ ग्रीष्मधान्यान्यथोक्षगे ।
मूलादीनां च विक्रेता तुरिये मासि लाभभाक् ॥ ७१ ॥
मिथुनस्थे रसद्रव्यं गृहीत्वा मासपञ्चके ।
व्यतीते बहु विक्रेता त्रिगुणं लाभमाप्नुयात् ॥ ७२ ॥
फलम्पत्रञ्च वासश्च क्रीत्वा कर्कटके रवौ ।
मासषट्केन विक्रेता लभते लाभमुत्तमम् ।
मौक्तिकं रजतं लोहं गाङ्गेयं वापि सिंहगे ।
उपादायाष्टभिर्मासैर्विक्रेता लाभमाप्नुयात् ।
कन्यासमागते सर्व्वमौषधं द्रव्यमाहरेत् ।
लाभाय सप्तमे मासि प्रयुञ्जीत व्यये बुधः ॥ ७३ ॥
तुलाधिरूढे रत्नानि वस्तुजातञ्च तन्नवम् ।
गृहीत्वा मासषट्केन व्ययमानोऽश्नीयात्फलम् ॥ ७४ ॥
वृश्चिकोपगते क्रीत्वा भाण्डं मृद्चर्म्मनिर्म्मितम् ।
नवमे मासि विक्रीय चतुर्गुणमवाप्नुयात् ॥ ७५ ॥
क्रीत्वा चापोपगे शङ्खप्रवालमुद्गादिकम् ।
विक्रीय लाभमाप्नोति त्रिगुणं वा चतुर्गुणम् ॥ ७६ ॥
मकरे रत्नजातानि वर्म्माणि च विचक्षणः ।
क्रीत्वा मासाष्टकेनैव विक्रेता लाभमाप्नुयात् ॥ ७७ ॥
अयोदारुमयं कुम्भे क्रीत्वा तृणमयं तथा ।
मासत्रयेण विक्रेता फलं भूयोऽधिगच्छति ॥ ७८ ॥

मीने धान्यानि सर्व्वाणि पत्राण्यश्ममयानि च ।
गृहीत्वा मासषट्केन विक्रेता लभते फलम् ॥ ७९ ॥

इतिवाणिज्यविधिः ।

इत्युपक्षयदशाविधानं नामाष्टविंशोऽध्यायः ।

## एकोनत्रिंशोऽध्यायः ।

अतःपरं वीरदशाविधानं
प्रणीयते प्राच्यमतानुकूलम् ।
सर्व्वत्र यात्राविधिरत्र भव्याः
योगाश्च तत्राहितसिद्धयःस्युः ॥ १ ॥
तारकाःसप्त सप्तैव पादोनाःबहुलादयः ।
क्रमशो विष्टतद्वारं पूर्व्वादि दिक्चतुष्टये ॥ २ ॥
अश्वयुक्पुष्यमुष्णांशुरनुराधेति तारकाः ।
चतस्रःसर्व्वदिक्ष्वेव विष्टतद्वारसम्मताः ॥ ३ ॥
हस्ततिष्याश्वयुङ्मैत्रश्रविष्ठान्त्येन्दुविष्णवः ।
एताःस्युस्तारका चाष्टौ सर्व्वयात्रासु शोभनाः ॥ ४ ॥
त्रीणि पूर्व्वाणि चित्राहियाम्येन्द्रपवनाग्नयः ।
सर्प्पेशपितरःसर्व्वयात्रासु परिवर्ज्जिताः ॥ ५ ॥
पुष्यार्कमित्रतुरगाः प्रागादिषु सुशोभनाः ।
शुक्रशचन्द्रजीवानां वाराःप्रागादिशोभनाः ॥ ६ ॥
विहाय दिक्पतेर्वाराः सर्व्वे सर्व्वत्र शोभनाः ।
इति व्याचक्षते केचिद् सर्व्वत्र परिघं त्यजेद् ॥ ७ ॥

१ तत्रैहित सिद्धयःस्युः ।

नन्दा भद्रा जया पूर्णा पूर्व्वादिगमने शुभाः ।
चरेपु गरजं विष्टि विहायान्यानि शर्म्मणे ।
स्थिराणि करणान्युच्चैर्नेष्टानि विबुधैःसदा ॥ ८ ॥
कुजवारश्च मध्याह्नः पूर्व्वस्यां दिशि शोभनः ।
याम्ये यामास्तकालश्च वारौ शनिशशाङ्कयोः ॥ ९ ॥
वारुण्यां मध्यरात्राश्च वारौ च गुरुसौम्ययोः ।
उदयश्चोत्तराशायां वारौ शुक्रार्कयोर्हितौ ॥ १० ॥
तत्तदाशां व्रजेत्तत्तद्राशिलग्नेषु बुद्धिमान् ।
योगिनीं पुरतः कृत्वा याति यःस विनश्यति ॥ ११ ॥
द्वितीया च तृतीया च पञ्चमी सप्तमी शुभाः ।
दशम्येकादशी या तु पौर्णमासी त्रयोदशी ॥ १२ ॥
आदश्रम्प्रतिपत्तिथेस्तिथिवशात्पूर्व्वादिकाष्टाष्टकं
क्रान्त्वा दैत्यगुरुःक्रमेण च दिवं भूमिं प्रयातो यदा ।
सर्व्वानर्थमसौकरोत्यसुमतां कार्य्योद्यतानां तदा
पृष्ठे दक्षिणतः प्रशस्तफलदो वामे मुखेऽनर्थकृत् ॥ १३ ॥
गोनृयुक्कार्किकन्याश्च तुलाचापौ तु सर्व्वतः ।
यात्रायां केचिदिच्छन्ति कुम्भःसर्व्वत्र निन्दितः ॥ १४ ॥
मूर्द्धोदय प्रशंसन्ति सर्व्वयात्रासु पण्डिताः ।
पापास्त्र्ययारिगाः शस्ताः सौम्याः सर्व्वे तथैव च ॥१५॥
नेष्टो लग्नेऽष्टमान्त्यस्थः पूर्णोऽपि शशलाञ्छनः ।
गुरुः षष्ठाष्टमान्त्यस्थो नेष्टः शुक्रोऽपि सप्तमे ।
पञ्चमं द्वादशञ्चैव शुद्धमिच्छन्ति कोविदाः ॥ १६ ॥
लग्नार्थबन्धुधीदारधर्म्मकर्म्मायगाः शुभाः ।
दशमस्थः शनिश्चेष्टः सर्व्वयात्रासु धीधनैः ॥ १७
याने श्रविष्टा विमाणां श्रवणं ध... ।

अनुराधा विशामिष्टा शूद्राणां रेवती हिता ॥ १८ ॥
तत्तद्यात्रासु शुभदा नरस्त्रीपण्डतारकाः ।
रोहिण्यां वृषभे लग्ने गोयात्राक्षेमसाधनम् ॥ १९ ॥
अश्विन्यां चापपश्चार्द्धे हयानां गमनं हितम् ।
सोमभे मिथुने लग्ने दन्तियात्रा प्रशस्यते ॥ २० ॥
तिरश्चां गमनम्पथ्यं पुष्यभे मिथुनोदये ।
पक्षिणां शुभदा यात्रा कन्यायां हस्ततारके ॥ २१ ॥
जलयात्रा प्रशस्ता स्याद्वारुणे चोत्तरत्रये ।
कन्याकुलीरमीनेषु वारयोर्जीवशुक्रयोः ॥ २२ ॥
स्वयं यातुमशक्यश्चेच्छत्रशय्यादिनिर्गमम् ।
पूर्व्ववत्र रात्रौ सम्पूज्य प्राप्ते काले तु कारयेत् ॥ २३ ॥
छत्रदण्डाक्षमालाग्निकमण्डल्वजिनाम्बरम् ।
विप्राणां ब्रह्मसूत्रञ्च निर्गमे कार्य्यसाधनम् ॥ २४ ॥
जीविकासाधनं सर्व्वं पुस्तकाभरणादिकम् ।
सर्व्वेषां निर्गमे शस्तमभिप्रेतार्थसिद्धये ॥ २५ ॥
श्रद्धायुतः शुचिस्नातः प्रसन्नेन्द्रियमानसः ।
भुक्त्वापूज्य तथापृच्छ्य निर्गच्छेद् गुरुणोषितः ॥२६॥
क्षौरं क्रोधं भयं लोभं मद्यं मांसञ्च रोदनम् ।
मैथुनं तैलमभ्यङ्गं यात्रायां प्राग्विवर्ज्जयेत् ॥ २७ ॥
यःकृत्वा मैथुनं रात्रौ प्रभाते प्रस्थितो भवेत् ।
नासौ फलमवाप्नोति कृच्छ्रेण च निवर्त्तते ॥ २८ ॥
गच्छ जीव जय प्रेहि याहि मुञ्च विवर्ज्जय ।
प्रापयोत्तिष्ठ निर्गच्छ शब्दया गमने शुभाः ॥ २९ ॥
तिष्ठ मागा निवर्त्तस्व मूढ मूर्ख जल्पेति सं...

१ नरस्त्रीपण्डतारका । २ मांसानारोदनम् ॥

यात्रायां विघ्नदाःशब्दा विपादप्रतिपादकाः ॥ ३० ॥
विना बलात्कृतं वृद्धबाल*पीतासिनां क्षुतम् ।
क्षुतं सर्व्वत्र नेष्टं स्याद् गोक्षुतं मरणप्रदम् ॥ ३१ ॥
यात्रायां दक्षिणे रुत्वा पश्चाद्वामे विरौति चेद् ।
श्रेष्ठा वाभिमुखे दृष्टा नेष्टा गोली च दक्षिणे ॥३२॥
प्रस्थाने मङ्गलं वाक्यं गर्ज्जनं मेघहस्तिनम् ।
दक्षिणे सफलो वृक्षो वायसस्य च कूजितम् ।
गीतवादितशब्दाश्च सिद्धये श्रुतिरीदृशी ॥ ३३ ॥
आक्रन्दो वञ्जुलादीनां दक्षिणे विरुतं क्षुतम् ।
अनर्थसूचकं वाक्यमीदृशं स्यादसिद्धये ॥ ३४ ॥
वैश्यो विप्रो नृपः कन्या गौर्दन्ती मुरजध्वजौ ।
क्षीराज्यदधिशङ्खाम्बुच्छत्रं भेरि फलं सुरा ॥ ३५ ॥
तण्डुलं हेम रूप्यञ्च सिद्धयेऽभिमुखा अमी ।
सकाष्टः सानलःकारुर्मलिनाम्बरभारहृत् ॥ ३६ ॥
गलस्पटङ्गोगोमायुः गृध्रोलूककपिञ्जलाः ।
महिषाभिषवौ मांसे निषेधः पतनं वधः ॥ ३७ ॥
कलशःसर्व्वजातीनां सम्मार्ज्जनविलेपने ।
तैलं कपालं कार्पासं भस्मन्येतान्यसिद्धये ॥ ३८ ॥
भुजङ्गदर्शनं यातुः शत्रुभ्यो भयमावहेत् ।
लवनञ्च गुडं काष्टमभ्यक्तञ्च कषायितम् ।
नग्नं विमुक्तकेशञ्च दृष्ट्वा गेहं पुनर्व्रजेत् ॥ ३९ ॥
भारद्वाजस्य शिखिनो मृगस्य नकुलस्य च ।
दर्शनं सर्व्वतःश्रेष्टमतिश्रेष्टम्पदक्षिणम् ॥ ४० ॥
यदुक्त१द्विदेशे वायसानां शुनामपि ।

---

* पीनसिना । १ कपिञ्जिकाः ।

उग्रेयं तच्च यात्रायामनुरूपवशादिह ॥ ४१ ॥
क्रोशादूर्ध्वं गमनविरतं निष्फलं माहु*राचार्या
स्तत्रानिष्टे प्रथमशकुने मानयेत् पञ्चपट्वा ।
प्राणायामान्नृपतिरशुभे षोडशैतान् द्वितीये
प्रत्यागच्छेत् स्वभवनमधुना यद्यनिष्टं तृतीये ॥ ४२ ॥

इतियात्राविधिः ।

———:o:———

प्राच्यां प्राश्य घृतं गच्छेद्दक्षिणश्च तिलौदनम् ।
मत्स्यभोजी व्रजेत्पश्चात् सौम्यं पायसभोजनम् ॥ ४३ ॥
अभिन्नमाषाःसतिलाश्च तण्डुलाःगवां दधि कव्यमपेनमम्भवम् ।
फलञ्च मार्गं रुधिरंपटोलकं घृतश्च सार्पि पिशितं तिलौदनः ॥४४॥
षष्टिकान्नथ शावञ्च प्रियङ्गुञ्चश्भोजनम् ।
आमलक्यं कुलत्थाञ्च माक्षिकं सर्पिरेव च ॥ ४५ ॥
मूलान्यम्बुनि सक्तुर्वा शालि निश्रावशारि च ।
बीजपूरं तिलाश्च मधु शर्करया युतम् ।
षारादं पिशितं क्षीरमश्विन्यादिषु भक्षयेत् ॥ ४६ ॥
यूपं दधि तथा लाजा घटकं पायसं निष्टम् ।
पिष्टमेव तु वाराणामशनाय प्रकीर्तितम् ॥ ४७ ॥
नन्दायां शाकशाकश्च भद्रायां गव्यपायसम् ।
यूपं जयायां सक्तूनां रिक्तायाञ्च गुडोदकम् ।
पूर्णायां वैनतुल्याये कृत्वा गच्छेत् सुखं व्रजेत् ॥ ४८ ॥
सर्वत्र दधं मधु मण्डुलोदकं घृतं दवादुदं सरिच्चभोजनम् ।
चौरार्द्रकन्दो मधु बीजपूरं [illegible] ॥ ४९ ॥

---

* देवे । † [illegible]

सपायसश्चैव गुडं सितोत्थं मुद्गान्नकञ्च प्रथमाद्यनुक्रमात् ।
अभ्यक्ष्यसस्पर्शमलभ्यकानां स्मृतिश्च सिद्धिं गमने ददाति॥५०॥

इति यात्राभक्ष्याविधिः ।

———:0:0:0:———

नृपाणां गमनं योगैर्भगनैश्च द्विजन्मनाम् ।
शकुनैश्चरचोराणां शेषाणां क्षणवीर्यकैः ॥ ५१ ॥
यथावात्तिथिनक्षत्रवारराशिग्रहोदयाः ।
गमने दुर्लभास्तस्माद्योगान् वक्ष्याम्यहं लघु ॥ ५२॥
होरा कुटुम्बसहजस्थानेषु क्रमशो गताः ।
शुक्रगुर्विन्दवः शत्रुविनाशायार्थसिद्धये ॥ ५३ ॥
सपापके भ्रातरि सेन्दुसप्तमे सितज्ञयुक्ते हिबुके च निर्गतः ।
तजीवलग्ने विनिहन्ति शत्रून् शुभोदये नात्मगृहं प्रतीयात्॥५४॥
स्वलाभगेषु शेषेषु जीवे लग्नगते गतः ।
अर्थलाभमरेर्नाशमारोग्यं लभते नरः ॥ ५५ ॥
अनष्टमगते चन्द्रे षष्ठे चण्डांशुसंश्रिते ।
बृहस्पत्युदये यायाच्छत्रुनिघ्नलभते धनम् ॥ ५६ ॥
गुरुशुक्रार्कसौम्येषु लग्नाद्येषु चतुर्ष्वपि ।
कुजमन्दयुते षष्ठे चन्द्रे च दशमं गते ।
यात्रा शुभफलदा नित्यं शत्रुनाशकरी सदा ॥ ५७ ॥
शुक्रवर्जितमामित्रे लग्ने गुरुयुते गतः ।
त्रिषडेकादशस्थेषु मन्दारार्केष्वभिष्टदा ॥ ५८ ॥
लग्नयुक्ते गुरौ यायाच्छत्रुमित्रे शशिनि स्थिते ।
शुभेषु च धनस्थेषु धनलाभादिलाभभाक् ॥ ५९ ॥
होरा शुभफला याने सर्वैःसंस्थितैः शुभैः ।
अशुभाश्च दुःखदा नित्यं चन्द्रार्किजाः ॥ ६० ॥

होरा गुरुमती लाभे पापसंघसमाश्रिते ।
इन्द्रारक्षसमायुक्ते यातुःसर्व्वार्थसिद्धिदा ॥ ६१ ॥
लग्नार्धगेषु सौम्येषु दशमे रविसंयुते ।
गमनं विजयारोग्यमर्थसिद्धिं प्रदास्यति ॥ ६२ ॥
त्रिकोणकेन्द्राश्रितसर्व्वसौम्यास्तृतीयषष्ठायगताश्च पापाः ।
फलन्ति यातुः शुभमिन्दुरेको लग्नाचतुर्थङ्गतवांश्च तद्वत् ॥ ६३ ॥
यदा कलत्रगश्चेन्दुः शुक्रज्ञौ गृहमागतौ ।
गन्तव्यमपि चारेण तदा सर्व्वार्थसिद्धये ॥ ६४ ॥
पञ्चम्यां शुक्लपक्षस्य स्वातौ गुरुदिनोदये ।
क्रयविक्रययात्रायां योगोऽयं परमो मतः ॥ ६५ ॥
मित्रर्क्षेण प्रयातस्य शाक्रे पर्य्युषितस्य च
पुनर्मूले प्रयातस्य कार्य्यसिद्धिर्भविष्यति ॥ ६६ ॥
हस्तेन गत्वा प्रथममपर्य्युष्य द्वये ततः ।
पुनश्चतुर्थे सम्प्राप्तः शत्रुवर्गं स घातयेत् ॥ ६७ ॥
स्थित्वैकं दिवसं तिष्ये रेवत्यां वाथ वासवे ।
सीम्नि भूयः प्रविष्टोऽन्तर्बहुलाभमवाप्नुयात् ॥ ६८ ॥

इति यात्रायोगः ।



गुरावस्तुपगे लग्ने लाभे शुक्रसमागते ।
शनेर्द्रेकाणे संस्थो राजावश्यं वशी भवेत् ॥ ६९ ॥
परे वर्गोत्तमे भागे नक्रस्थयोः सौम्यजीवयोः ।
लग्नस्थचन्द्रहोरायां राजवश्य वशी भवेत् ॥ ७० ॥
भौमवारे कुम्भांशे स्वांशे वसुधाधुरः ।
मन्दे स्वलग्ने युद्धं कुर्वाणो म्रियते ध्रुवम् ॥ ७१ ॥

शत्रोरष्टमगे चन्द्रे विपन्नाडीमुपागते ।
मन्दे शत्रौ च षष्ठस्थे विजयं लभते युधि ॥ ७२ ॥
अतिनीचगते मन्दे षष्ठस्थे लेयलग्नतः ।
चन्द्रे वर्गोत्तमांशस्थे दृष्टः शत्रुवशी भवेत् ॥ ७३ ॥
इन्दावत्युच्चगे सौम्ये स्वक्षेत्रांशगतेऽपि वा ।
जैवे दृकाणे संदृष्टो द्विजोऽवश्यं वशी भवेत् ॥ ७४ ॥
शुक्रे निजत्रिकोणस्थे तुलांशकगते बुधे ।
मन्दे परमनीचस्थे दृष्टो वैश्यो वशी भवेत् ॥ ७५ ॥
शनौ परमनीचस्थे बुधस्य विंशद्‌शके ।
होरायां तरणेर्दृष्टः शूद्रोऽवश्यंवशी भवेत् ॥ ७६ ॥
मषायने वृषनृयुग्मकुलीरसिंह कन्यातुलाजलचवृश्चिकलीधिकायाम्।
कुम्भालिचापमकरा मिथुनायने स्युरारूढवर्ग्यमरतःसमभातपञ्चम॥
आरूढोदयराशिं यश्छत्रस्थं वीक्षते नरः ।
स तस्य वशतां याति दारैरपि धनैरपि ॥ ७८ ॥
विपरीतविधानेन वैपरीत्यं विनिर्दिशेत् ।
दृष्टे तु जीवशुक्राभ्यां न दोषस्तत्र जायते ॥ ७९ ॥
स्वयन्तुदयमारूढो वैरपामस्तमये स्थिताम् ।
वीक्षते गुरुणा दृष्टो वशगा तस्य सा भवेत् ॥ ८० ॥
गुरौ लाभगते मन्दे षष्ठस्थे भार्गवांशके ।
उत्तमर्णमवाप्नोति याचमानोऽपि दुःस्थितम् ॥ ८१ ॥
दातुर्व्ययगते सौरे लग्नारूढे च भार्गवे ।
स्पृहयन्निन्दुरोगपामधमर्णधनान्नृपात् ॥ ८२ ॥
यद्धात्मा वदने न्यस्तो ग्राह्याणि गमनान्तरन् ।
सर्वाणीदि हरेत् पुंसो वादे च सभिभां तथा ॥ ८३ ॥

---

१ स्पृहयन्नीन्दुरोगयाम ।

जीवेऽत्युच्चगते स्वस्य दशमस्थे विवादिनः ।
त्रिकोणस्थे शनौ मीनलग्ने वादे जयी भवेत् ॥ ८४ ॥
सहादेवीदूर्वामधुपमुपली विष्णुदयिता ।
सदा भद्रा लक्ष्मी शतमसलतामाञ्जलिकरी ।
य एतान् भ्रातः स्वे शिरसि कलयेच्छ्रीपरिकरान् ।
यतो भ्रातस्येदं भुवनमखिलं तिष्ठति वशे ॥ ८५ ॥

इत्यभीष्टसिद्धिविधिः ॥

इति वीरदशाविधाने नाम एकोनत्रिंशोऽध्याय : ।

## त्रिंशोऽध्यायः ।

ब्रवीमि संकीर्णदशाविधान
मतःपरं तत्र च सद्गृहीतम् ।
दीक्षाप्रतिष्ठा पितृकर्म्मभृत-
विपामयानां प्रशमाः क्रमेण ॥ १ ॥
उत्तराणां त्रयं मूलमदितिर्वारुणाश्विनौ ।
अनुराधा पुंसा च पुंसां दीक्षाविधौ हिताः ॥ २ ॥
चित्रा स्वातिश्च मैत्रश्च मन्त्रज्यायां स्त्रियो हितम् ।
तत्र दीक्षासु सर्वेषां तत्तद्वारादयः शुभाः ॥ ३ ॥
कन्यार्ताल्निनृयुग्वर्ग्याः दोषाः स्युर्न्दयाःशुभाः ।
अच्छिद्रास्तियपःशस्ता मन्दांशःसर्व्वासिद्दिदः ॥ ४ ॥
केन्द्रत्रिकोणेषु शुभाःप्रशस्ताः
पापास्त्रिलाभारिगताःशुभाय ।

प्रहानभिष्टा मरणमयाता
अतक्षयायास्तगतश्च शुक्रः ॥ ५ ॥
यदि भावाश्रितश्चन्द्रो लग्नस्थःशुभदःसदा ।
चतुर्थे दशमे जीवस्तपस्सिद्धिं प्रयच्छति ॥ ६ ॥
धर्मस्थानगताःपापा न चिराद् व्रतभङ्गदाः ।
प्रव्रज्याभिहिता योगाः प्रव्रज्यायां सुशोभनाः ॥ ७ ॥
पञ्चमस्थश्च माहियः चन्द्रश्च नवमं गतः ।
मन्दश्च सहजस्थाने व्रतसिद्धिं प्रयच्छति ॥ ८ ॥
इतिप्रव्रज्याविधिः ।

———:o:———

उत्तराणां त्रयं पुष्यमनुराधा च रोहिणी ।
वारुणं वसु मित्रेति नवव्रतविमुक्तये ॥ ९ ॥
तौलिकन्यानृयुग्मीनाः शुभवारांशकादयः ।
त्रिकोणगौ सितेन्दू च व्रतमुक्तौ शुभावहाः ॥ १० ॥
इतिप्रव्रज्यामुक्तविधिः ।

———oo———

उत्तरायणगे भानौ मासि कुम्भविवर्जिते ।
यजमानानुकूलर्क्षे बलयुक्ते निशाकरे ॥ ११ ॥
अस्तशैशववार्द्धक्यमुक्तयोर्जीवशुक्रयोः ।
ब्रह्मादितीन्दुतिष्यान्तहस्ताश्वात्युत्तरत्रये ॥ १२ ॥
देवप्रतिष्ठा कर्त्तव्या सौम्यवारोदयादिषु ।
अयुग्मास्तिथयःशस्ताः युग्मासु दशमी तथा ॥ १३ ।
स्थिरक्षेत्रगतश्चन्द्रः स्थिरराश्युदयःशुभः ।
उच्चस्थानगतश्चन्द्रो यजमानःशुभावहः ॥ १४ ॥

मित्रस्थानगतश्चन्द्रो मित्रसौम्यधनावहः ।
नीचराशिगतःसोऽयं दारिद्र्यं सम्प्रयच्छति ॥ १५ ॥
शत्रुक्षेत्रगतश्चन्द्रः शत्रुवृद्धिं समावहेत् ।
अर्केन्दुराहुसौरास्तु स्थापने लग्नसंस्थिताः ।
भ्रातृस्थानगताःसर्व्वे ग्रहास्तुष्टिविवृद्धिदाः ॥ १६ ॥
बन्धुस्थानगताःक्रूराः कुर्व्वन्ति सुखनाशनम् ।
तदेव वर्द्धयिष्यन्ति सौम्याश्चन्द्रविवर्ज्जिताः ॥ १७ ॥
सुतस्थानगतास्तीक्ष्णाः पुत्रमृत्युप्रदाःसदा ।
तत्र स्थिताःशुभाश्चन्द्रवर्ज्याः सर्व्वे सुखप्रदाः ॥ १८ ॥
नाशयन्ति रिपुं क्रूराः शत्रुस्थानसमाश्रिताः ।
जीवस्तत्र स्थितःकुर्य्याच्छत्रुवृद्धिं विशेषतः ॥ १९ ॥
कुरुतःस्थानविभ्रंशं तत्रस्थौ भृगुचन्द्रजौ ।
कुर्य्याज्जामित्रगो भानुर्यजमानविनाशनम् ॥ २० ॥
सौरःसौख्यविनाशाय बुधःपुत्रविनाशकृत् ॥
कुजस्त्वग्निभयं कुर्य्यात् पिशाचव्यसनं भृगुः ।
जीवेन्दू सप्तमस्थौ तु कुर्य्यास्तां धनवर्द्धनम् ॥ २१ ॥
अष्टमस्था ग्रहाःसर्व्वे कुर्व्वन्ति कुलनाशनम् ।
धर्म्मस्थानगताःसौम्याः कुर्य्युर्धर्म्मविवर्द्धनम् ॥ २२ ॥
पापाश्चन्द्रयुताःकुर्य्युः सौख्यधर्म्मधनक्षयम् ।
नभःस्थानगताःक्रूराः कुर्व्वन्ति स्थाननाशनम् ॥ २३ ॥
चन्द्रयुक्ताःसदा सौम्याः पुत्रवित्तसुखप्रदाः ।
ग्रहाःसर्व्वेऽपि लाभस्थाः कुर्य्युरारोग्यसम्पदम् ॥ २४ ॥
द्वादशस्थानगाःपापाः शुक्रचन्द्रसमायुताः ।
दारिद्र्यं सम्प्रयच्छन्ति यजमानाय नित्यशः ।
तत्रस्थौ वित्तवृद्धिश्च कुर्य्यास्तां गुरुचन्द्रजौ ॥ २५ ॥

ज्येष्ठोत्तरत्रयकरान्त्यचतुर्मुखाश्वि-
कृष्णान्विते शुभतिथिग्रहवारवर्गे ।
तिर्य्यङ्मुखोदययुतेष्वथ सम्मुहूर्त्ते-
ष्वुन्मीलनं नयनयोः प्रतिमासि कुर्य्यात् ॥ २६ ॥
अनेनैव विधानेन गर्भनाशश्च बुद्धिमान् ।
ऊर्णीपस्थापनञ्चैव वर्णलेपादिकां क्रियाम् ॥ २७ ॥

इतिदेवप्रतिष्ठापनविधिः ।

——००——

विप्राणां हितमाधत्ते श्राद्धमेकादशेऽहनि ।
नृपाणां षोडशे वच्मि विशां विंशे दिने भवेत् ॥
शूद्राणां मासि पूर्णे तु पितृकर्म्म विधीयते ॥ २८ ॥
अपराह्णःशुभःपापदिनस्य च चरोदयः ।
श्राद्धस्य नूतनस्यैव विधिरेष विनिश्चितः ॥ २९ ॥
पितरो मित्रयाम्येन्दुहस्ताश्विश्रवणादयः ।
श्रविष्ठापुष्यचित्राश्च प्रशस्ताः पितृकर्म्मणि ॥ ३० ॥
विशाखा रोहिणी भाग्यपौष्णादिसोत्तरत्रयम् ।
वर्ज्जनीया नवश्राद्धे विधातुर्मरणप्रदा ॥ ३१ ॥
विष्कुम्भाद्याःकुयोगाश्च विष्टिश्च गुलिकाःशुभाः ।
प्रथमैकादशी षष्ठी पौर्णमासी चतुर्दशी ।
तिथिस्त्रयोदशी चैव श्राद्धकर्म्मणि वर्ज्जिता ॥ ३२ ॥
श्राद्धे मन्दार्कयोःपूज्याः द्रेष्काणदिवसादयः ।
क्षीणेन्दोर्भूसुतस्यापि कैश्चिद्वारादिरिष्यते ॥ ३३ ॥
पापान्तर्गतसौम्यस्य शोभनं दिवसादिकम् ।
कुलीरमकराजानामुदयाःश्राद्धसम्मताः ॥ ३४ ॥

जन्मराश्युदयो नेष्टः पञ्चमःसप्तमोऽपि च ॥
रर्क्षवक्रोदयो वर्ज्यो दृष्टो युक्तोऽपि सद्ग्रहैः ॥ ३५ ॥
विपदप्रत्ययोरेव वधे वैनाशिकेऽपि च ।
चन्द्राष्टमे च कर्त्तव्यं द्वादशाष्टमहोदये ॥ ३६ ॥
कर्तुस्त्रीजन्मनक्षत्रं दाराणां स्वसुतस्य च ।
सप्तविंशद्दिनं कर्त्तुः श्राद्धकर्म्मणि वर्जितम् ॥ ३७ ॥
केन्द्रविकोणगाःपापाः सौख्यामित्रधनावहाः ।
ऽव्ययारिव्ययरन्ध्रस्थाः ग्रहाःसौम्याः शुभप्रदाः ॥ ३८ ॥
शुक्रस्य दिवसांशाधास्तस्यं केन्द्रास्तिथिःक्षणम् ।
कर्तुर्मृत्युं करोत्येव नवश्राद्धे विचार्य्यते ॥ ३९ ॥
एवमेवाष्टकश्राद्धं मासश्राद्धश्च पैत्रिकम् ।
चन्द्रसूर्य्योपरागे वा सङ्क्रमेऽप्ययनेऽथवा ॥
व्यतीपातेऽप्यमावास्यां सदा श्राद्धं विधीयते ॥ ४० ॥
त्रयोदश्यामवावस्यां गृही श्राद्धं करोति चेत् ।
सुतैव मृत्युमाप्नोति ज्येष्ठपुत्रो विनश्यति ॥ ४१ ॥
मासि प्रोष्ठपदे माघे सर्व्वेषां कृष्णपक्षतः ।
कर्त्तव्यमष्टकश्राद्धं गृहस्थानां विशेषतः ॥ ४२ ॥

## इतिश्राद्धविधिः ।

---

हर्षेच्छाभयशोकादेर्विरुद्धा शुचिशोभनात् ।
गुरुदेवादिकोपाच्च पञ्चोन्मादा भवन्त्यमी ॥ ४३ ।
आगन्तुः सन्निपातश्च विदोष इति ते स्मृताः ।
हर्षणस्फोटनाक्रन्दगीतसङ्गीनरोदनम् ॥ ४४ ॥

---

१ केन्द्रास्तिथिःक्षणम् ।

वृश्चिककालीकणाकुष्ठलवणानि च भार्गिका ।
अपस्मारविनाशाय तच्चूर्णं नसि योजयेत् ॥ ५६ ॥
सर्व्वोन्मादविनाशेषु सर्व्वग्रहविधिष्वपि ।
रुद्रभश्च चतुष्पादो मन्दाभं वृश्चिकोदयः ॥ ५७ ॥
मले द्वयं क्रमाद्विष्णु विपूर्व्वं वह्निसुन्दरी ।
कर्णे जपाद्ग्रहं हन्याद्भूतेशध्यानतोऽथवा ॥ ५८ ॥
हृदयश्च चतुर्थ्यन्तो भगवान् रुद्र इत्यपि ।
शत्रुन्ते महिरप्यस्माद्भैरवो देव इत्यपि ।
समस्तोऽयं चतुर्थ्यन्ते पदान्येतानि योजयेत् ॥ ५९ ॥
ग्रहान् नर्त्तय मोटय वलगय क्रीडय उग्रचण्डहुंफट्ठठ ।
एषभूतपिशाचादौ सर्व्वकर्म्मकरो मनुः ।
अस्य स्मरणमात्रेण प्रलीयन्ते ग्रहादयः ॥ ६० ॥

इतिगृहध्वंसविधिः ।

---

कृत्तिकाभरणीस्वातिर्मूलं पूर्व्वत्रयाश्विनी ।
विशाखार्द्रामघाश्लेषा चित्रा श्रवणरोहिणी ॥ ६१ ॥
तारास्तासर्पदष्टस्य दुष्टा मन्दकुजौ तथा ।
पञ्चमी चाष्टमी षष्ठी रिक्ता दष्टस्य निन्दिता ॥ ६२ ॥
तस्यातिनिन्दिता कृष्णे पञ्चमी च चतुर्दशी ।
सन्ध्याचतुष्टयं दुष्टं दग्धयोगाश्च राशयः ॥ ६३ ॥
देवालये शून्यगृहे वल्मीकोद्यानकोटरे ।
रथ्यां सन्धौ चैत्यतरौ श्मशाने सिन्धुसङ्गमे ॥ ६४ ॥
द्वीपे चतुष्पथे सौधे गहने वेत्रपद्मयोः ।
पर्व्वताग्रे बिलद्वारे जीर्णकूपाश्मकूटयोः ॥ ६५ ॥

शीघुश्लेष्मातकाशेषु जम्बूदुम्बरवेणुषु ।
वटेषु जीर्णप्राकारे दंशःसर्प्पस्य निन्दितः ॥ ६६ ॥
इन्द्रियाण्योष्ठहृदकक्षस्तनभ्रूमध्यकुक्षयः ।
तालु शङ्खो गलं मूर्द्धा चुबुकं नाभिमस्तकम् ॥ ६७ ॥
द्वौ पादमध्यं स्कन्धश्च सर्पदंशस्तु निन्दितः ।
पुष्पादिहस्तःशुभवाक् धीरःशुक्लाम्बरोऽमलः ॥ ६८ ॥
लिङ्गवर्णसमानश्च दृष्टो दूतःशुभो मतः ।
अपद्वारगतःसस्त्री प्रमादीभू*गतेक्षणः ॥ ६९ ॥
विवर्णवासाः पाशादिहस्तो गद्गदत्वर्णवाक् ।
शुष्ककाष्ठाश्रितःखिन्नस्तैलोक्तस्कन्धरांशुकः ॥ ७० ॥
आर्द्रवासाःकृष्णरक्तपुष्पो मुक्तशिरोरुहः ।
कुचमर्दी नखच्छेदी गुदस्पृक् पादलेखकः ॥ ७१ ॥
केशलुञ्छी तृणादिच्छेद्दुर्व्यङ्गःखरादिशः ।
सद्वितोयोरुदं मुण्डी दुष्टा दूताःस्युरीदृशाः ॥ ७२ ॥
दिशादिषु स्थितो दूतो वन्यादीन् सूचयेदहीन् ।
दूतःस्थितश्चेद्वामेऽङ्घ्रौ दक्षिणे वा द्वयोरतः ॥ ७३ ॥
इतन्यावावेहद् दिग्वा यदि दूतस्य वात्मनः ।
अद्यान् वाहान् पृथक् सम्पन्दि विद्याद स्त्रीपुंनपुंसकान् ७४
दूतःस्पृशति यद्गात्रं तस्मिन् दंशमुदाहरेत् ।
नभो गीताद्विपं वादेन्नाविपवेति निर्द्दिशेत् ॥ ७५ ॥
दूतकाले यतो जीवः पर्व्वे दंशस्ततोऽन्यतः ।
अग्रे दूतस्य वामाङ्घ्री शुभोऽन्यस्यादृशोऽन्यथा ॥ ७६ ॥
दूताङ्घ्रिचलनं दुष्टं तदवस्थितिर्निश्चला...
जीवपार्श्वे शुभो दूतो दुष्टोऽन्यत्र स...

* ततेक्षणः ।

दूतस्य वाक्य दृष्टान्त्या पूर्व्वमाहुर्विनिन्दितम् ।
त्रिभक्तमुक्तस्य वाक्यार्णविरणिविषक्रान्तना ॥ ७८ ॥
आर्थिःस्वरंधकाथ वर्गभिन्नान्निपिर्निया ।
स्वरा जीवस्तनुर्वर्गे इतिज्ञेया च मात्रका ॥ ७९ ॥
वातान्नीन्द्रजलात्मनो वर्गेष्वर्णाश्चतुष्टयाः ।
नपुंसकाःपञ्चमास्युः स्वराःशक्राम्बुयोनयः ॥ ८० ॥
दुष्टे दूतस्य वाक्यादौ वातान्निमध्यमो हरिः ।
महास्ता वारुणा वर्णा श्रुतिदुष्टा नपुंसकाः ॥ ८१ ॥
जीवकाव्योदयौ श्रेष्ठौ स्वक्षेत्रेषु तदोदयौ ।
शुक्रगुर्वोर्विर्धौदृष्टिर्दूतकाले शुभा मता ।
मुक्ता मन्दग्रहाः सर्व्वे गच्छन्तोऽस्तं न शोभनाः ॥ ८२ ॥
ग्रहामयचिकित्सानां मन्त्रेष्वपि विचक्षणः ।
परीक्ष्य विधिनानेन सिद्धौषध्यां प्रवर्त्तते ॥ ८३ ॥
धातोर्धात्वन्तरापत्तिर्विषवेग इतिस्मृतः ।
दंशे स्थित्वा त्रिपश्चाद्यन्मात्राः संवर्द्धते विषम् ॥ ८४ ॥
विष दंशाल्ललाटं यातो नेत्रे ततो मुखम् ।
आस्याद्यधमनीम्नाभ्यो धावन् व्याप्नोति हि क्रमात् ॥८५॥
वेगो रोमाञ्चमाद्यो रचयति विषजस्वेदवक्त्रोपशोषौ
तस्योर्ध्वस्ततरोहौ वपुषि जनयतो वर्णभेदप्रवेपौ ।
यो वेगःपञ्चमोऽसौ नयनविवसतां कण्ठभङ्गञ्च हि क्कां
षष्ठो निश्वासमोहौ वितरति च मृतिं सप्तमो दष्टकस्य ॥८६॥
यस्याङ्गानां जलत्वं श्वयथुरवयवोद्वेगदाहौ मलाभो
विड्भेदश्कैशैलुच्छः सुकरमरुणतापाङ्गयोर्भ्रान्तिरक्ष्णोः ।
कृष्णाश्रकम्पशूलौ हृदि च विघटनादन्तदन्तच्छदानां

१ वाक्यवर्णे ।

मरिचं वा कुलं बीजं गुञ्जाश्च नरवारिणा ।
नस्यपाने प्रकुर्व्वीत सक्तसंज्ञेऽपि दष्टके ॥ ९६ ॥
मातृसंघातहस्तेन रामठं पासवान्वितम् ।
नस्याञ्जनादिना रक्षेद्दष्टमप्यष्टभोगिभिः ॥ ९७ ॥
मूत्रेण वा कुलं बीजं नस्यपानादिना जयेत् ।
विषमेतत् फणीन्द्राणां दृष्टिदावानलं तथा ॥ ९८ ॥
विंशतिकृत्वःशकृदपि दिनकरदुग्धेन भावितं ( तच्च ) ॥
निर्म्भं खादिदाश्म स्वस्थाविशश्च कारयति ॥ ९९ ॥
स्वेतार्कमूलं गिरिकर्णिकञ्च भृङ्गमनालं लवणञ्च कुष्ठम् ।
नस्याञ्जनाभ्यञ्जपानयोगादुच्चिप्तते वा सुखिनापि दष्टः१००
तरुणनरकतकफलरसबहुभावितमेलखण्डपरिमृदितम् ।
सलिलं सतैलमखिलं हरति विषं नासिकानिहितम् ॥१०१॥

इति दर्व्वीकरचिकित्सा ।

——:o:——

कुमारी कारवल्लीश्चे कतकारी शीग्रुणा सह ।
भृङ्गराजं नृमूत्रेण लिम्पेन्मण्डलिग्लानये ॥ १०२ ॥
गोक्षीरेण तु सम्पिष्टस्त्रवल्ली मरुन्धृतः ।
तेनैव पाययेत् सर्व्वं विषं मण्डलिनां जयेत् ॥ १०३ ॥
स्नुह्मूलमाजदुग्धेन जलेनार्कशिफाथवा ।
पानादपहरेत्सद्यः सर्व्वमण्डलिनां विषम् ॥ १०४ ॥
कृष्णवल्लीदलं वाथ तुम्बिकां वा सपम्फनम् ।
धान्याम्लरसलेपेन रक्तमण्डलिनां हरेत् ॥ १०५ ॥
अन्यत्पदलकल्को वा मातिपच्छकनो ऽपरा ।

१ तककारी ॥

विषशोफौ कटुष्णौ तौ घ्नान्तपोन्तलको ऽपि वा ॥ १०६ ॥

इति मण्डलिचिकित्सा ॥

---

अटवीं कारवल्लीञ्च कन्दक्षीरेण पाययेत् ।
शारिवायास्तथा मूत्रैर्नस्यं वा हन्ति राजिलम् ॥ १०७
वचा चिर्भिट वर्षाभू मूलानि सह कञ्जिकैः ।
पिवेद्राजिलजं सर्व्वं विषं नश्यति निश्चितम् ॥ १०८ ॥
तैलेन गृहधूमस्य नस्यं राजिलदंशिनाम् ।
तदहर्वत्समविरं मूत्र नस्यं तत्र फणोन्यपि ॥ १०९ ॥
मागधक्षौद्रसिन्धूत्थान् गोशकृद्वारिणा सह ।
पाययेद्राजिलैर्दष्टं क्षणं निर्व्विषतां व्रजेत् ॥ ११० ॥
परिशुष्कन्तु सम्पिष्य नरगूथं तदम्भसा ।
पाययेदुद्गतौ व्यालविषसंहरणाय तु ॥ १११ ॥

इति राजिलचिकित्सा ॥

---

सर्व्वाहिविषनाशाय टङ्कनस्य रसोऽम्भसा ।
नस्य लेपन पानार्थैरुपदेशोऽयमुत्तमः ॥ ११२ ॥
पुनर्नवरसेनैव रामठं कीर्त्तितं बुधः ।
नस्यं कुर्व्वीत सर्व्वेष्वप्येकं वैकुण्ठिकारणम् ॥ ११३ ॥
चम्पकस्य रसैर्नस्यं सर्व्वसर्पविषापहम् ।
बहुमूलस्य सौवीरैर्नस्यपानाञ्जनादयः ॥ ११४ ॥
अर्कपत्रेण लवणं नृमूत्रेण च पेषयेत् ।
लिम्पेत् सर्व्वविषं जयमिति प्रोक्तं पुरातनैः ॥ ११५ ॥

इति सर्व्वविषचिकित्सा ॥

---

नागवल्लीदलरसं रामठेन समन्वितम् ।
कंसे करेण सम्पिष्टं लिम्पेद् वृश्चिकनाशनम् ११६ ॥
कराभ्यां नक्तमालस्य दलं पिष्ट्वा विचक्षणः ।
विद्धप्रदेशे बध्नीयात् सद्यो वृश्चिकमस्यति ॥ ११७ ॥
वचा दिनकरक्षीरे लिप्ता वृश्चिकनाशिनी ।
लाजया सह संयुक्ता श्रवणान्तर्गतं मलम् ।
वेधे सङ्घर्षणेनैव विषं वृश्चिकजं जयेत् ॥ ११८ ॥
पलासबीजमर्कस्य क्षीरेण सह पेषितम् ।
लिम्पेद् वृश्चिकवेधे तु बहुभिः किं वितर्कनैः ॥ ११९ ॥

इति वृश्चिकविषचिकित्सा ॥

---

कपित्थोत्थितवन्दार्कक्षीरेण सह पेषयेत् ।
अष्टादशविधं घोरं मौषिकं नाशयेद्विषम् ॥ १२० ॥
असाध्याखुविषे दष्टे सरटेन सिनाखुना ।
प्रातर्माहिषतक्रेण शालिपानश्च पूजितम् ॥ १२१ ॥
समूलं हंसनादिन्नु गुञ्जां वा क्षीरपेषिताम् ।
पाययेद्धिपयेचैव मूषिकस्य विषं जयेत् ॥ १२२ ॥

इति मूषिकचिकित्सा ॥

---

रसेन लेपनं कुर्य्याच् छिरीषमुनिपत्रयोः ।
लूत प्रस्यापि वा तोयैर्लूता सद्यो विनश्यति ॥ १२३ ॥
पुष्पं दलं फलं कल्कं मूलश्चैव शिरीषजम् ।
योगो ऽयं लूतकीटादि विषध्वान्तस्य भास्करः ॥ १२४ ॥

इति लूताविषचिकित्सा ॥

---

अङ्कोलस्येशादिङ्मूलं क्षीरेण सह पाययेत् ।
घोराणामप्यलर्काणां विषं सद्यो विनश्यति ॥ १२५ ॥
यष्ट्यश्वगन्धया चैव जतुना गरकेन च ।
शृता क्षीरयवागुस्तु रुधिराश्रवनाशिनी ॥ १२६ ॥
पिप्फली भद्रमुस्ता च रोहिणी विश्वभेषजम् ।
एतद् प्रशमनं दद्याद्विषसुप्तप्रवोधनम् ॥ १२७ ॥

इति स्थावरविषचिकित्सा ॥

——:o:——

इति विषध्वंसविधिः ॥

——:o:——

आधाने जन्मनक्षत्रे चन्द्रे वाष्टमराशिगे ।
आमयो यदि जायेत क्लेशाय मरणाय सः ॥ १२८ ॥
पुष्यार्कविष्णुदस्राब्धिपौष्णब्रह्मादितीन्दवः ।
भौमार्कयोश्च वाराद्याः सर्व्वभैषज्यसम्मताः ॥ १२९ ॥
सर्व्वरोगप्रतीकारेष्वधोमुखदिनोदये ।
विधेयं शशिनो वारे स्वानुकूलं विरेचनम् ॥ १३० ॥
गुडसिक्तविदृद्विश्वःसैन्धवांशरजोयुतः ।
त्रिवृद् क्वाथःलताक्वाथः सगुडःस्याद्विरेचकः ॥ १३१ ॥
द्राक्षाक्वाथस्त्रिवृत्खण्डगुडयुक्तश्च रेचकः ।
विदध्याद्वमनं धीमान् प्रशस्तोऽर्द्धदिनोदये ॥ १३२ ॥
फकराठा कषायोत्थं पयोवमनकृद्भवेद् ।
शस्तौ कोशातकीस्वाकू वमने राठबीजवद् ॥ १३३ ॥
आद्यान्तब्रह्महस्तेन्दुर्जीववारुणभेषु च ।
जीवार्कयोश्च वाराद्ये दिवा चक्षुर्भावक्रिया ॥ १३४ ॥

तापिञ्जपत्ररजनी सेव्या गोपीपयोधरौ ।
त्रिफलावीति तद् क्वाथः मधुना नेत्ररोगजित् ॥ १३५ ॥
वर्त्तार्कतूलैःकृतया शशविड्भचूर्णया ।
आज्याक्तयामगीग्राह्याः सर्वनेत्रभयान्तकृत् ॥ १३६ ॥
त्रिफलाभृङ्गविश्वानां रसेषु मधुसर्पिषो ॥
मेषीक्षीरे च गोमूत्रे सिक्तं नागदशो हितम् ॥ १३७ ॥
जातिसिन्धुनिशाकृष्णकुनटीवनटीग्रहम् ।
सक्षौद्रकं सताम्राभ्रां निघृष्टं पिष्ठहृद्भवेत् ॥ १३८ ॥
लोध्रत्वग्घृतसम्भृष्टा खार्प्या पिष्ठा ससैन्धवा ।
वस्त्रस्थाश्च्योतिना दृग्भ्योऽभिस्यन्दनमपोहति ॥ १३९ ॥
सतैलद्रोणपुष्पाभ्रकृष्णवायसकृद्दशा ।
कर्णं पिष्ठाथ सक्षौद्रमञ्जनादीक्षणार्चिनुत् ॥ १४० ॥
कुर्य्यान्नासिक्यरोगेषु चिकित्सामर्कहोदये ।
स्तन्यं दुर्व्वाम्बुना नस्यं नासिका शृक् श्रमं हरेत् ।
नासाम्बुश्रवहृज्जिघ्रेद्वस्त्रधं कौरवी रजः ॥ १४१ ॥
चिकित्सां श्रुतिरोगेषु विदध्याच्छ्रवणोदये ।
रसः ससैन्धवः कोष्णे रम्भाग्रञ्जनमूलजः ॥
पृथगार्द्रकजोवापि पूरणात् कर्णशूलहा ॥ १४२ ॥
मेषोदयेऽभिनक्षत्रे मुखरोगचिकित्सितम् ।
महिषी नवनीतेक्षुपत्रभस्मानुलेपनम् ॥ १४३ ॥
जातिपत्रौष्म्यानिशाककवलम्फलमूत्रयुक् ।
नाशयेदोष्ठनं रोगं योगद्वयमिदम्भूपकृ ।
पुन्नाक्वाथे भयाकल्के सिद्धं तैलं द्विनार्चिनी ॥ १४४ ॥
धान्यासुनारिकेलं गोमूत्रं क्रमुकविदारयुक् ।
मायितं कवलं कार्य्यंनरैर्जिह्वादिरोगान्तये ॥ १४५ ॥

यमवारे च याम्यर्क्षे यमलग्ने विशेषतः ।
गण्डमालादिरोगेषु कण्ठजेषु चिकित्सितम् ॥ १४६ ॥
साधितं लाङ्गलीकल्के तैलं निर्गुण्डिकारसे ।
गण्डमालाश्च गलगण्डो नाशयेन्नस्यकर्मणा ॥ १४७ ॥
हस्तर्क्षे भानुवाराद्ये कुर्य्यात् कुष्ठचिकित्सितम् ।
पञ्चैरर्कपूतीकस्नुहीव्याघातजातिजैः ॥
उद्वर्त्तयेत् सगोमूत्रैः सर्व्वत्वग्दोषशान्तये ॥ १४८ ॥
वाकुची सतिला भुक्ता वत्सरं कुष्ठनाशिनी ।
भल्लातकं तिलश्चैव गुडपिण्डीच कुष्ठजित् ॥ १४९ ॥
मूले वा पुष्यनक्षत्रे गुदरोगचिकित्सितम् ।
पूतीकवह्निरजनी त्रिफला तिलचूर्णयुक् ।
तक्रं गुदाङ्कुरे पेयं भक्ष्या वा सगुडाभया ॥ १५० ॥
रौद्रे सार्प्पेच शक्रेच कुर्यान्मेहचिकित्सितम् ।
फलदार्व्वी विशालाभ्रकाथो दार्व्विरसोऽथवा ।
पातव्यो रजनीकल्कक्षौद्रयुक्तः प्रमेहिनाम् ॥ १५१ ॥
स्वातौ वा मित्रनक्षत्रे चिकित्सा श्रोणिते हिता ।
वासा गुडीची व्याघातकाथस्त्वेरण्डतैलयुक् ।
वातश्रोणितहृत् पीतः पिप्पली स्यात् प्लिहाहरी ॥१५२॥
दस्रभे शनिवारे च चिकित्सा जठरामये ।
सेव्या जठरिणा कृष्णस्नुक्क्षीरबहुभाविता ।
पयो वा चव्यदन्त्यङ्गविषगौ व्योषकल्कयुक् ॥ १५३ ॥
ग्रन्थिकान्यभया कृष्णा विलङ्गाक्ते घटे स्थितम् ।
मसन्तकं ग्रहण्यर्शः पाण्डुगुल्मक्रिमीन् हरेत् ॥ १५४ ॥
फलत्रयामृतावासा तिक्तभूनिम्बनिम्बजः ।
क्वाथः समाक्षिको हन्यात् पाण्डुरोगं सकामिलम् ॥१५५॥

रक्तपित्ती पिबेद्वासा स्वरसं ससिता मधु ।
वरी द्राक्षा बला शुण्ठी साधितं वा पयःपृथक् ॥ १५६ ॥
भाग्ये च पितृनक्षत्रे क्षयरोगचिकित्सितम् ।
वरीविदारीपथ्याश्च बलात्रयनवायुतम् ॥
स्वदंष्ट्रां मधुसर्प्पिभ्यामालिहेत् क्षयरोगवान् ॥ १५७ ॥
रौद्रे मुहूर्त्ते विहिता विद्रध्यादिप्रतिक्रियाम् ।
पथ्या शीग्रुकरञ्जार्कत्वगेला विश्वसिन्धुयुक् ।
समूत्राविद्रधिग्रन्थिपिलकोपचिकादिहृत् ॥ १५८ ॥
विहृततेजस्वती दन्ती मञ्जिष्ठा रजनी द्वयम् ।
तार्क्ष्यगं निम्बपत्रञ्च पिष्ट्वा लिम्पेद्भगन्दरे ॥ १५९ ॥
व्याघातरजनी लाक्षा चूर्णंजयक्षौद्रसंयुता ।
वासवर्च्चिव्रणे योज्या शोधिनी गतिनाशिनी ॥ १६० ॥
शामा यष्टि निशा लोध्रपद्मकोत्पलचन्दनैः ।
सशारिवे श्रुतं तैलं क्षीरे स्याद्व्रणरोपणम् ॥ १६१ ॥
श्रीकार्प्पासिदलैर्भस्मफलोपणवरी निशा ।
तालिपण्डी स्वेदनं ताम्रे सतैलं स्यात् क्षतौषधम् ॥ १६२ ॥
कुम्भी शामपयोयुक्तं वह्निदग्धव्रणे दिशेत् ।
तदेव नाशयेत् शोकान्नारिकेलरजो घृतम् ।
दूर्व्वापत्रमपामार्गपत्रं स्यादश्रबन्धनम् ॥ १६३ ॥
अतीसारचिकित्सा स्यान्मुहूर्त्ते रौद्रसंज्ञिने ।
नाभौ लिम्पेत्तण्डुलाभिस्तालीमूलं विसूचिहृत् ।
नश्येद् भृङ्गाम्बुमुष्णाभिः कृष्णाविषे पिबेदपि ॥१६४॥
विस्वाजमोदासिन्धूत्थविश्वात्वग्भिः समाभया ।
तक्रेणोष्णाम्बुना वापि पीतातीसारनाशिनी ॥ १६५ ॥
वत्सकातिविषोदीच्यबिल्वमुस्तशृतं जलम् ।

सामे पुराणेतीसारे साश्टकशूले च पाययेत ॥ १६६ ॥
अङ्गारदग्धं स्नुहहतं सिन्धुमुष्णाम्बुना पिवेत् ।
शूलवानथवा तद्वत् सिन्धुहिङ्गुकणाभया ॥ १६७ ॥
वरारोहोत्पलातङ्कराजचूर्णं मधुप्लुतम् ।
वस्त्रच्छन्नगतं वक्रे न्यस्तं तृष्णा विनाशयेत् ॥ १६८ ॥
यासदार्व्वीजातिफलद्राक्षाम्रतफलत्रयैः ।
साधितं समधुयुक्तं कवलं मुखपाकहृत् ॥ १६९ ॥
कृष्णातिविषतिक्तेन्द्रदारुपाठापयोमुचाम् ।
काथो मूत्रेशृतः क्षौद्री सर्व्वकण्ठगदापहः ॥ १७० ॥
पथ्या गोक्षुर दुस्पर्श राजवृक्षशिलाभिदाम् ।
कपायः समधुः पीतो मूत्रकृच्छ्रामपोहति ।
सस्नुहत्वग्वरणाकाथः शर्करास्मरिपातनः ॥ १७१ ॥
शाक्रे मुहूर्त्ते भाग्यर्क्षे वृद्धिरोगचिकित्सितम् ।
ऐन्द्रिमूलं कुवेराक्षि शृङ्गं वा वृद्धिमान् पिवेत् ।
तद्वयं सिन्धुयुक्तं वा तक्रेणोष्णाम्बुनाथवा ॥ १७२ ॥
गुल्मरोगचिकित्सा स्यादुत्तरत्रयवारिभे ।
सौवर्चलाजाहिङ्गुनां सदीप्यानां रजोयुतम् ।
विल्वं दीपकयुक्तं वा वातगुल्मातुरःपिवेत् ॥ १७३ ॥
सार्प्पे सर्प्पमुहूर्त्ते च विसर्प्पाणां चिकित्सितम् ।
धात्री पटोलमुस्तानां काथः सर्व्वविसर्प्पनुत् ॥ १७४ ॥
शोफमातिक्रिया स्वातिरेवतीरोहिणीषु च ।
शुण्ठी दारु नवा क्षीर काथो मूत्रान्वितः परम् ।
सव्योषयो रजक्षारफलकाथश्च शोफनुत् ॥ १७५ ॥
वहुलासु शनैर्वारे जठराग्निचिकित्सितम् ।
सिन्धुहिङ्ग्वीरकौ व्योषदीप्याहिङ्गुरजोऽम्बुयान् ।

आज्याक्ते प्रथमग्रासे वह्निरुद्घातनाशनः ॥ १७६ ॥
सार्पे मुहूर्ते सर्पर्क्षे भवेत् काशचिकित्सितम् ।
वातरोगचिकित्सा च कैश्चित्तत्रैव पठ्यते ॥ १७७ ॥
कटुत्रयी पद्मकदेवदारुराष्णविडङ्गत्रिफलामृतानाम् ।
चूर्णं समांशं सितयावलीढं काशान् हरेत् कृष्णकमेव पापान्१७८
कर्पासास्थिशिलाकटूनि बदरीपत्रश्च भृङ्गीरस
स्नहर्त्री कुणटी कटुत्रयरविक्षीरान्विता वर्त्तिका ।
गोपी मागधिका शिलांशविहिता वर्त्तिः शिलाविश्वयोः
वर्त्तिश्च क्रियया यथाविहितया काशानशेषान् हरेत्॥१७९॥
यस्मिन् वातरुजास्तिग्राह्यिग्रहगोदण्डाकनेत्रोज्ज्वलान्
गात्रे तत्र विनीततो हरति तान् सूर्य्यस्तमिस्रामिव ।
ध्यातो हन्ति तथैव नाभिवलये यः स्वाशकाशादि काम्
श्लेष्मानश्च गलेक्षणेऽतिजठरे मन्दानलन्दापयेत् ॥१८०॥
चतुः षष्टिपुटे क्षेत्रे पञ्चविंशच्छूलदीपिते ।
जरानारित्रयाभानुकोष्ठासु हृत्तिषु क्रमात् ॥ १८१ ॥
लिखेत् सचिन्दुरत्रस्थश्चक्रं तद्भूस्थमर्म्मयेत् ।
न स्युस्तत्र शयानस्य ज्वराःसर्वे विधानतः ॥ १८२ ॥
कुल्याभ्यां साग्रशूलाभ्यां कृत्वा कान्तं शशिद्वयम् ।
कुल्यासन्धौ लिखेत्तारं याम्ये कोष्ठद्वये विषम् ।
सान्तं सौम्ये च तच्चक्रं यथाचाम्यूलगं ज्वरी ॥ १८३ ॥
तक्रे वाज्ये पिबेद्बिल्ववन्दाकां विषमज्वरे ।
वङ्गासुरसयोर्मूले बध्नीयादद्व्याह्निकज्वरे ॥ १८४ ॥
गुञ्जापकफलं चिञ्चावेष्टितं शिरसि न्यसेत् ।
त्र्याहिकज्वरनाशाय न याम्ये यदि वार्तुतत् ॥ १८५ ॥

---

१ साम्यं । बायरंरुजास्ति ।

रम्भाफलं मूलशतं निःश्वासं हन्ति भक्षितम् ।
कृष्णोपणानिशाराष्णाद्राक्षातैलं गुडं लिहेत् ॥
धात्री लाजा सिताक्षौद्रतैलाज्यं श्वासकाशहृत् ॥ १८
धात्री विश्वसिता कृष्णा मुस्ताखर्जूरमागधी ।
पिच्छभस्मा च हिक्काग्रस्तत्रायं मधुना लिहेत् ॥ १८७ ।
रेखाभ्यामग्रशूलाभ्यामाक्रम्येन्दुं लिखेद्रिपम् ।
कोष्टेषु तारं मध्ये च चक्रं हस्ततलेऽर्पितम् ।
दुष्टं हन्ति शिरोरोगं चिन्त्यमानं यथामृतम् ॥ १८८ ॥
निर्व्वी रजस्य चक्रस्य सान्तं कोष्ठेषु विन्दुमत् ।
तथैकरुद्रं वा तस्य लिखेत् कोष्ठेषु दण्डिनम् ।
न्यसेन्मूर्ध्न्युपधाने च शिरोरोगस्य शान्तये ॥ १८९ ॥
स्वेदयेत् पायसेनापि कुष्माण्डैरण्डयोःशिफे ।
खार्य्यं लिम्पेच्छिरोरोगे पारिभद्रत्वचं तथा ॥ १९० ॥
आर्की सौम्यशिफापेया मारिहृत् तण्डुलाम्भसा ।
पाठोपानञ्च पानेन हरेत् सद्यो मसूरिकाम् ॥ १९१ ॥
तुरगार्कशिफा तुटी निशा द्वयहंसाङ्घ्रिहिराशृतं घृतम् ।
उपसेवनतो विनाशयेदुपदंशास्तनावद्रुधिक्षताम् ॥ १९२ ॥
सिंही यष्टी निशाग्रुग्मवत्सककाथसेवितम् ।
शिशोस्सर्व्वातिसारे च स्तन्यदोषे च शस्यते ॥ १९३ ॥
सकृष्णातिविषा शृङ्गी चूर्णितं मधुना लिहेत् ।
एकावती विषा काशश्छर्दि ज्वरहिता शिशोः ॥ १९४ ॥
देवदारुसहाशीग्रुफलत्रयपयोमुचाम् ।
काथः सकृष्णमृद्वीकः कल्कः सर्व्वान् क्रमीन् हरेत् ॥१९५॥
हरिद्राराजवृक्षत्वग्चिञ्चालवणलोलिता ।
पीताखारि हरेद्राधु गवामुदररंमहनम् ॥ १९६ ॥

१ हृदनम् ।

क्षीरपिष्टं तिलम्पाठा कार्पासदलमेव च ।
तक्रेण सहितं पीतं नाशयेद्गोविशूचिकाम् ॥ १९७ ॥
सलिलं नारिकेलस्य खारीक्षीरं वलारसम् ।
चतुष्टयमिदम्पानाद् करीपार्श्वं हरेद्व्रणम् ॥ १९८ ॥
वचालशुननिर्गुण्डी दीप्यर्क सफनीवकम् ।
खार्य्या कुष्माण्डा पुर्य्याके करीषे पाययेद् पथ्यम् ॥ १९९॥
सहस्ररश्मिरादित्योऽग्निठठ ।
पत्रे लिखितमेतद्वाः पालयेद् कलितं गले ।
वाङ्क्षीं ह्रुं पुं क्षीं ह्रंह्रं क्षीं ह ह्रुं क्षीं कलंठठ ॥ २०० ॥
षड्गुणषड्दिवसं त्रिसहस्रं नियमक्षवलयेन च जप्त्वा ।
साधिनमन्त्रयन्त्रोतिजप्य स्पर्शनेन भवतामपह्नुत स्यात् २०१
*अङ्गुष्ठोऽङ्घ्रिकगुल्फजानुमदनावासाश्च नाभिश्च हृद्

ग्रीवा चाप्यथ नासिका च नयनं कर्णश्च चिल्ली तथा।
तन्मध्यास्त्वथ शङ्खमस्तकमिति मारभ्य शुक्लादिमम्
पुंसां दक्षिणतश्चरेत्तिथिवशाद्देहे सुधायाः कला ॥२०२॥

---

अस्यार्थः। पक्षयोः शुक्लकृष्णयोः कथिता निरूपिता चान्द्री कला चन्द्रमम्बन्धी अंशविशेषः ऊर्ध्वाधश्चलनक्रमेण शुक्ले ऊर्ध्वचलनेन कृष्णे अधश्चलनेनेत्यर्थः वामभ्रुवां रमणीनाम् अङ्गुष्ठे, चरणे, गुल्फनिलये गुल्फस्थाने, जानुद्वये, वस्तिके नाभ्यधोभागे, नाभौ, वक्षसि, जङ्घयोः, कण्ठे, कपोले गण्डे, अधरे, नेत्रे, कर्णयुगे, ललाटफलके, मौली शिरसि, च निगदिता उक्ता ॥

सीमन्ते नयनेऽधरे च गलके कक्षस्तटे चूचुके
नाभौ श्रोणितटे मनोभवगृहे जङ्घातटे गण्डके।
गुल्फे पादतले तदङ्गुलितटेऽङ्गुष्ठे च तिष्ठत्यसौ
वृद्धिक्षीणतया समं शशिकला पक्षद्वये योषिताम् ॥

अस्यार्थः। पक्षद्वये शुक्लकृष्णयोः असौ शशिकला चन्द्रकला वृद्धिक्षीणतया शुक्ले वृद्ध्या कृष्णे क्षीणतया क्षयेण समं समभावेनेत्यर्थः योषितां नारीणां सीमन्ते केशे, नयने, अधरे, गलके कण्ठे, वक्षस्तटे, उरसि, चूचुके कुचाग्रे, नाभौ, श्रोणितटे नितम्बे, मनोभवगृहे योनौ, जङ्घातटे, गण्डके कपोले, गुल्फे, पादतले, चरणतलेऽङ्गुलितटे तस्य चरणस्य अङ्गुलिदेशे, अङ्गुष्ठे वृद्धाङ्गुली च तिष्ठति ॥

सुधारोहावरोहौ तु पार्श्वयोर्व्यत्ययात् स्त्रियाम् ।
सुधायास्सप्तमे स्थाने कला क्ष्वेडस्य तिष्ठति ॥ २०३ ॥
आस्येयत्रामृतमवयवे तस्य खुर्दोविपत्र
स्तस्मिन् दष्टो यदि च गुलिको नापि न स्यादिवापत् ।
स्थाने यस्मिन्*नहि विपकला मर्दनं तस्य कुर्यात्
क्ष्वेडस्योग्रं वितरति मृतिं तत्सदंशश्शुभोऽपि ॥ २०४ ॥
क्ष्वेडे कण्ठगताम्बुदण्डिसमुखं ध्यानोपभोगाङ्गले
भुक्तश्चेद्विपमप्युदग्रममृतञ्जायेत निर्दोपतः ।
अत्रैवमहर्निशं बलमनस्तेजोऽङ्गपुष्टयादिभाग्
जीवेद् दुःखजरापमृत्युपलितातङ्कादिमुक्तश्चिरम् ॥२०५॥
गुह्यं यदा याति कला सुधाया वश्यत्र भोगेऽपि तदाशु याति।
भोगे सुधास्थानविमर्दचुम्बोऽवश्याय शुक्लसरणाय च स्यात्२०६
स्थाने यस्मिन् सा सुधायाः कलास्ते
तत्स्थान् प्राणान् सन्ततं चिन्तयेद्यः ।

आयुःपुष्टिश्रीवयःस्तम्भसम्पत्
तेजोरूपाः शक्तयस्तस्य सन्ति ॥ २०७ ॥
पथ्याचित्रकशृङ्गिवेरमुशलीछिन्नोद्भवानां रजः
तुल्यांशङ्गुडपाकिमं दिनमुखे लेह्यं जनैर्निसशः ।
दृष्यं पुष्टिकरं जरापलितहृत् तेजोवयोवर्द्धनं
सर्व्वव्याधिहरं रसायनमिदं वर्षोपयोगाद्भवेत् ॥ २०८ ॥

इति रोगध्वंसविधिः

---

इति सङ्कीर्णदशाविधानं नाम त्रिंशोऽध्यायः ।

---

## इत्यनवमदर्शिनः स्थविरस्य कृतौ दैवज्ञकामधेन्वां मङ्गल्यविधानप्रकरणं नाम तृतीयम् ।

---

विश्रामद्वीपभूमिर्ग्रहचरितफलग्रन्थसिन्धूपगाना
मादेशग्रन्थचिन्तातपविवशधियां निर्द्दतस्वर्गगङ्गा ।
भास्वद्रत्नावलीयं विविधविधिमयालङ्कृती सस्पृहाणां
सन्तुष्टयै कस्य न स्यात् सुचिरमनुश्रुता दैवविद् कामधेनुः ॥१॥
ग्रहगणितविधानं तत्फलं जातकाख्यं
विधिमपि च निमित्तं सत्क्रियाणां विधानम् ।
स्पृहयितुरलमेके नैव शास्त्रेण वेत्तुं
परिलघु लिखितेयं दैवविद् कामधेनुः ॥ २ ॥

इत्यनवमदर्शिना स्थविरेण कृता दैवज्ञकामधेनुः समाप्ता ।

---

शिवमस्तु ।

---

१ पाकितं ॥

BENARES SANSKRIT SERIES;
A
COLLECTION OF SANSKRIT WORKS
EDITED BY THE
PANDITS OF THE BENARES SANSKRIT COLLEGE,
UNDER THE SUPERINTENDENCE OF
R. T. H. GRIFFITH, M. A., C. I. E.
AND
G. THIBAUT, PH. D.
*Nos. 97, 104, & 116.*

---

# दैवज्ञकामधेनुः ।

अर्थात्

प्राचीनज्योतिषग्रन्थः ।

लङ्कायाम् हस्तवनगल्यनामकेमहाविहारेऽध्युषितेन
महामहोपाध्यायेन श्रीमताअनवमदर्शीसङ्घराजवरेण सङ्कलिता ॥

# DAIWAGNAKÂMADHÊNU,

A Treatise on Astrology

By the very Venerable Anavamadarsî Sangharâja
Mahâsthavira of the Hastavanagalya Parivena, Ceylon.

Edited by the Very Rev. C. A. Seelakkhandha
Sthavira of the "Sailabimbârâma" Vihâra,
DODANDUWA, CEYLON
& *Setarama Upadhyaya, Sanskrit College Benares.*

BENARES:
*Published by the Proprietors Messrs. Braj B. Das & Co.,*
AND SOLD BY H. D. GUPTA,
*Secretary, Chowkhamba Sanskrit Book Depot.*
Printed at T. P.W. & the Vidyâ Vilâs Press,
BENARES.

1906.

# भूमिका ।

## विज्ञप्तिः ॥

दिनपतिकुलकमलेन श्रीशाक्यमुनिं प्रणम्य भगपादौ ।
सद्धर्मसङ्घसहितं गुरुञ्च सर्वार्थसिद्धिकरम् ॥ १ ॥
ज्योतिःशास्त्राभिज्ञैर्मुनिभिर्दिनकरवशिष्ठमुख्यैर्यत् ।
विहितं दैवज्ञशास्त्रं सार्थकास्तस्य पाठस्य ॥ २ ॥
श्रीमान् नवमदर्शी पण्डितवृन्दैर्निषेवितो धीमान् ।
दैवज्ञकामधेनुं विदधौ लोकार्थसंसिद्ध्यै ॥ ३ ॥
प्राग्वज्ज्योतिर्विद्भिः सम्भावितमपि समादरं बहुधा ।
कालक्रमवशेन विविधैर्दोषैस्तत् समभिव्याप्तमभूत् ॥ ४ ॥
तत् संशोधितमत्र मया ग्रन्थान्तराणि विलोक्य यत्नेन ।
बहुधा ग्रन्थाकारतः स्खलितानि भवन्ति यानि यदि ॥ ५ ॥

यदीयैर्बहुभिर्ज्योतिर्विद्भिः पण्डितैः प्रायः सर्व्वोत्कर्षतया सादरं परिगण्यन्ते तथा ऽद्भिकैर्दैवविद्भिश्च ॥ ज्योतिर्विदाभरणन्तु श्रीमता कालिदासेन महाकविवरेण कृतमिति केचिद् वदन्ति ।

अस्मिंस्तु ज्योतिःशास्त्रे पौलिशो रोमको वाशिष्ठः सौरः पैतामहश्चेति आदिमाः परमोत्कृष्टाः पञ्च सिद्धान्ता भवन्ति । पुरा किल सूर्य्यारुणसंवादानुसारेण गर्गादिषु मुनिषु एतच्छास्त्रविषयकं यज्ज्ञानं पुलिशेन महर्षिणा समुत्पादितं स पौलिशः सिद्धान्तो नाम । यद्वसिष्ठेन महर्षिणा स्वपुत्राय पराशराय दत्तं स वासिष्ठः सिद्धान्तो नाम । यत्तु सूर्य्येण मयाय दैत्याय प्रकाशितं स सौरः सिद्धान्तो नाम । यच्च ब्रह्मणा स्वपुत्राय वशिष्ठाय दत्तं स पैतामहःसिद्धान्तो नाम जातः । तथा चोक्तमरुणम्प्रति सूर्य्येण;—"पैतामहञ्च सौरञ्च वासिष्ठं पौलिशं तथा । रोमकञ्चेति गणितं पञ्चकं परमाद्भुतमि"ति । अतः पश्चात्तत्कालिकैरन्यैः पण्डितैरपि कृतास्तन्नामका नवीनाः सिद्धान्ता अपि सन्ति । साम्प्रतं भारतवर्षे ऋषिप्रणीतानामेव परमाद्भुतानां सिद्धान्तानां प्रमाणं कुर्व्वन्ति नापरेषाम् । तथापि वराहमिहिराचार्य्यकृतायां पञ्चसिद्धान्तिकायान्तु,—"पञ्चभ्यो द्वावाद्यौ व्याख्यातौ लाटदेवेने" ति वचनाल्लाटाचार्य्येणाऽपि पौलिशरोमकौ द्वौ सिद्धान्तावेव स्वकृते सिद्धान्ते व्याख्यातौ तयोर्भगणादिषु बीजं दत्त्वा विस्तारितावित्युक्तम् । अत्रेदमुच्यते लाटाचार्य्येण पौलिशरोमकौ द्वे सिद्धान्तौ स्वीकृत्य तयोर्बीजादिविशेषं विधाय कृतोऽन्यः सिद्धान्तोऽपि स्यात् । अत एव ममेदं करणं सर्व्वजनस्वीकृतं भवेदिति मत्वा पञ्चानां सिद्धान्तानां मतान्यवलम्ब्य वराहमिहिराचार्य्येण पञ्चसिद्धान्तिका रचितेतिभावः । तत्र कालनियमादयः श्रीसुधाकरद्विजन्मना कृतायां पञ्चसिद्धान्तिकाप्रकाशिकायामुक्तानुसारेणावगन्तव्याः ॥

यतस्तु यः कश्चित् दैवचिन्तको होरागणितादिकमेतत् करणम्

त्वार्य्यस्य सकाशाद् ग्रन्थतश्चार्थतश्च जानाति स वै संहितापारगो भवति। यदा तेन दिनकरादीनां ग्रहाणां चारप्रकृतिविकृतिप्रमाणवर्णकिरणद्युति संस्थानास्तमयोदयमार्गमार्गान्तरवक्रानुवक्रर्क्षग्रहसमागमादिभिः फलानि सूचयितुं शक्यन्ते। ततो राजमहामात्यादिभिः प्रभुजनैरपि सम्मानितः पूजितश्च भवति दैवचिन्तकः। तथोक्तं गर्गेण महर्षिणा,।

"कृत्स्नाङ्गोपाङ्गकुशलं होरागणितनैष्ठिकम्।
यो न पूजयते राजा स नाशमुपगच्छति॥

वनं समाश्रिता येऽपि निर्ममा निष्परिग्रहाः।
अपि ते परिपृच्छन्ति ज्योतिषां गतिकोविदम्॥

अप्रदीपा यथा रात्रिरनादित्यं यथा नभः।
तथा सांवत्सरो राजा भ्रमत्यन्ध इवाध्वनि॥

मुहूर्त्तं तिथिनक्षत्रमृतवश्चायने तथा।
सर्व्वाण्येवाकुलानि स्युर्न स्यात् सांवत्सरो यदि॥

तस्माद्राजाऽधिगन्तव्यो विद्वान् सांवत्सरोऽग्रणीः।
जयं यशः श्रियं भोगान् श्रेयश्च समभीप्सता॥

नासांवत्सरिके देशे वस्तव्यं भूतिमिच्छता।
चक्षुर्भूतो हि यत्रैष पापं तत्र न विद्यते॥

न सांवत्सरपाठी च नरकेषूपपद्यते।
ब्रह्मलोकप्रतिष्ठाञ्च लभते दैवचिन्तकः॥

ग्रन्थतश्चार्थतश्चैतत् कृत्स्नं जानाति यो द्विजः।
अग्रभुक् स भवेच्छ्राद्धे पूजितः पङ्क्तिपावनः॥

म्लेच्छा हि यवनास्तेषु सम्यक् शास्त्रमिदं स्थितम्।
ऋषिवत्तेऽपि पूज्यन्ते किं पुनर्दैवविद् द्विजः॥

कुहकावेशपिहितैः कर्णोपश्रुतिहेतुभिः ।
कृतादेशो न सर्वत्र प्रष्टव्यो न स दैववित् ॥
अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्रपद्यते ।
स पङ्क्तिदूषकः पापो ज्ञेयो नक्षत्रसूचकः ॥
नक्षत्रसूचकोद्दिष्टमुपहासं करोति यः ।
स व्रजत्यन्धतामिस्रं सार्द्धमृक्षविडम्बिना ॥
नगरद्वारलोष्टस्य यद्वत् स्यादुपयाचितम् ।
आदेशस्तत्वदज्ञानां यःसत्यः स विभाव्यते ॥
सम्परया योजितादेशस्तद्विच्छिन्नकथाप्रियः ।
मत्तः शास्त्रैकदेशेन त्याज्यस्तादृगमहीक्षिता ॥
यस्तु सम्यग्विजानाति होरागणितसंहिताः ।
अभ्यर्च्यः स नरेन्द्रेण स्वीकर्तव्यो जयैषिणा ॥
न तत् सहस्रं करिणां वाजिनां वा चतुर्गुणम् ।
करोति देशकालज्ञो यदेको दैवचिन्तकः ॥
दुःस्वप्नदुर्विचिन्तितदुःप्रेक्षितदुष्कृतानि कर्माणि ।
क्षिप्रं प्रयान्ति नाशं शशिनः श्रुत्वा भसंवादम् ॥
न तथेच्छति भूपतेः पिता जननी वा स्वजनोऽथवा सुहृत् ।
स्वयशोऽभिवृद्धये यथा हितमाप्तः सबलस्य दैववित् ॥"

इत्थमस्मिन् ज्योतिःशास्त्रे कथङ्कारं स्वल्पेन समयेन अनायासेन नैपुण्यसाधनाय अल्पमतिर्मानवः समुद्योगं कुर्य्यात् । तथोक्तमार्य्यविष्णुगुप्तेन ।

अप्यर्णवस्य पुरुषः प्रतरन् कदाचि
दासादयेदनिलवेगवशेन पारम् ।
नत्वस्य कालपुरुषाख्यमहार्णवस्य
गच्छेत् कदाचिदनृषिर्मनसाऽपि पारम् ॥

अत एव शुचिना दक्षेण प्रगल्भेन वाग्मिना प्रतिभानवता देशकालविदा सात्त्विकेन न पर्षद्भीरुणा सहाध्यायिभिरनभिभवनीयेन कुशलेनाऽव्यसनिना शान्तिपौष्टिकाभिचारस्नानविद्याभिज्ञेन विबुधार्चनव्रतोपवास निरतेन स्वतन्त्राश्चर्योत्पादितज्ञानप्रभावेन अभिजातेन प्रियदर्शनेन विनीतवेषेण सत्यवचनेनाऽनसूयकेन समेन सुसंहतोपचितगात्रसन्धिनाऽविकलेन चारुकरचरणनखनयनचिबुकदशनश्रवणललाटभ्रूत्तमाङ्गेन वपुष्मता गम्भीरोदात्तघोषेण येन केनचिन्मानवेन अस्मिन्ज्योतिःशास्त्रे उद्ग्रहणधारणाय समुद्योगं करणीयमेवेति सूचितम् ॥

इयं खलु दैवज्ञकामधेनुर्नाम आब्रह्मादिविनिःसृते वेदाङ्गभूते निरतिशये ज्योतिषागमे नानानयविभागपरिकल्पनाभिजिज्ञासूनां सकलानां दैवचिन्तकानां रत्नमुकुरसन्निभा स्यात् । सेऽयं निखिला भीष्टार्थप्रदायिनी सुरभिरेव ज्योतिःशास्त्राभिजिज्ञासूनाम् । तस्यास्तत्तत् सदुपदेशावबोधकरणन्तु दैवज्ञकामधेनुरिति स्वनाम्नैव याथार्थ्यात् सम्यक् प्रतीयते मनस्विनाम् । अस्यास्तु दैवज्ञकामधेनोर्निर्माता भूसुरवंशैककेतुः पूज्यपादःसर्व्वविद्याकलापु पारदर्शी पण्डितशिरोमणीभूतः श्रीमान् अनवमदर्शी नाम स्थविरवरः अतस्त्वेकपष्ट्युत्तरपट्शतसंवत्सरादुपरि त्रिपष्ट्यधिके एकादशशतपरिमिते शाकेऽब्दे लङ्कायां नेकराज्यश्रीविभूतिसमुदयसमुल्लसिते सकलशत्रुकुम्भरदर्पनिहतकेशरिविक्रमे विदितसमयान्तरे विज्ञातविद्यानिचये धन्यपुण्यलक्षणोपशोभिते कलिकालसाहित्यसर्व्वज्ञपण्डितपराक्रमबाहो नाम नृपवरे राज्यमनुशासति तस्यैव राज्ञो यथोचितविधिनियोगात् तत् साहाय्येन दक्षिणलङ्काधरणेः परिरक्षितेन रत्नत्रयातिप्रसन्नेन परिशुद्धाशयेन मतिशमदेवनामकेन पण्डितेन महामन्त्रिणा प्रतिसंस्कृते प्रासादनिकरसमलङ्कृते निर्मलशीतलाम्बुपरिपूर्णपुष्करणीमनोहरे विविधयतिगणनिसेविते उत्तुङ्गायातधवलवर्णप्राकारपरिक्षिप्ते प्रियदर्शने विश्रुते हस्तवनगल्यनामके महाविहारे चिरमुवास ॥

स च महास्थविरवरः सकलेषु वेदवेदाङ्गादिषु च न्यायालङ्कृतिस्मृतिप्रभृतिशास्त्रेषु च चतुःषष्ठिकलासु च पारदर्शी जिनवरप्रणीतेषु परमोत्कृष्टेषु सुत्ताभिधर्म्मविनयसङ्ख्यातेषु त्रिषु पिटकेषु च विशेषदर्शी विबुधाग्रणीः सज्जनपरिजननिसेवितचरणयुगलो वशीकृतेन्द्रियः शान्तो दान्तो गुणवान् शीलवांश्चाऽभूत् । स चाऽयं महास्थविरवरो राज्ञा पण्डितपराक्रमबाहुना सकलेऽपिलङ्कादीपे सङ्घराजधुरि नियुक्तः सन् सुतरां सगौरव सबहुमानपुरःसरं चतुर्भिःप्रत्ययैः सर्व्वदा सङ्ग्रहीतः संमानितश्च । स हि सङ्घराजवरो लोकोपकृतिं कर्तुकामःसन् गर्गपराशरवशिष्ठभोजमणित्थबादरायणप्रह्लादनबृहस्पतिव्यासमुबोधसारस्वतविष्णुगुप्तवराहमिहिरादीनां पूर्व्वीयाणां निर्म्मलबुद्धीनां महाशयानां मतांश्च पौलिशरोमकवाशिष्ठसौरपैतामहादीनां परमाद्भुतानां सिद्धान्तानां क्रमांश्चानुगम्य मधुरकोमलपदावलीमिमां दैवज्ञकामधेनुं नात्यल्पां नातिविस्तरामुद्ग्रहणधारणसुकरां कृत्वा एतत्कालीयानां गणकानां दैवचिन्तकनाञ्च हितार्थसाधनाय निरमीमात् ॥

अनेन श्रीमता अनवमदर्शिना सङ्घराजवरेणा ऽपि अस्याः प्रारम्भे,— " प्राच्यैर्वराहमिहिरादिभिरप्ययायी " ति वचनात् ज्योतिःशास्त्रे विख्याततकीर्त्तिमतेर्वराहमिहिराचार्य्यस्य मतान्येव अस्यां दैवज्ञकामधेन्वां प्रायः स्वीकृतानीत्यवगम्यते । तथा होराफलप्रदर्शने ऽपि व्यासभोममतानि चा॰ तस्मादेषा सर्व्वैर्ज्योतिर्विद्भिः सम्भावनीया । एतत्कालीयानां नानातन्त्रावलोकने विरलोत्साहानां मन्दबुद्धीनां दैवचिन्तकानां स्वल्पेन कालेन अनायासेन ज्योतिश्शास्त्रमहार्णवं तीर्त्वा यथेप्सितार्थसिद्धौ एषा दैवज्ञकामधेनुः क्षुद्रनौकावद्भवति । अत एषा जयश्रीयशःकामैर्दैवचिन्तकैः सादरं सततं भावनीया । एषा दैवज्ञकामधेनुस्त्रिंशदध्यायैरन्विता । तेष्वध्यायेषु यानि यानि निर्दिष्टानि तानि सर्व्वाणि चिह्नद्वारेण संज्ञापूर्व्वकं कृत्वा अत्रैवानुक्रमणिकायां पृथक् पृथक् सन्दर्शितानि । तानि तत्र गतानुसारेणैव अवगन्तव्यानि ॥

अस्य च पुस्तकस्य एतद्देशे इदानीं विरलोपलम्भाद्येषां केषाञ्चित्तेन पुस्तकेन अर्थे सति तदर्थं सुखं साधयितुं न शक्यते। अपि च कथङ्कारमपि महता उत्साहेन पुस्तकं लब्ध्वा विलोकयतस्तस्य चित्तमतोऽवसाद्यते तद्व्याकुलतया दुर्घटतया च। एतस्य पुस्तकस्य बहुकालमनधीतशास्त्राणां केषाञ्चिद्दैवचिन्तकानामेवान्तरे व्यवहारोपगतत्वात्तेषां यथामति बोधवशात् ततत् पाठादीनां परिवर्तनाल्लिपिकरप्रमादाच्चातीवव्याकुलतामापेदे। इह खलु पुस्तके कस्मिंश्चिदध्याये पठितानां श्लोकानाम् अपरस्मिन्नध्याये लेखनादाकुलतायां बहूनि वक्तव्यानि सन्ति। अपरेऽधिका दोषाश्च प्रायो दृश्यन्ते। अपरे श्लोका वा पाठा वेति निश्चयेन ज्ञातुमपि दुष्कराः। तेषां तेषां यथारुचि लिखिता अपि पाठाअभिनवा ऽदृश्यन्ते। ततश्चेह ग्रन्थे कालान्तरसम्भूतान् बहून् लिपिकरदोषान् शोधयित्वा लोकार्थं कारयितुकामैः प्रामाणिकैः कतिपयैर्विज्ञैस्तदर्थमहंविज्ञापितः॥

अहन्त्वनेन पुस्तकेन सर्व्वेषां ज्योतिश्शास्त्रमभ्यसितुमीहमानानामतीवप्रयोजनताञ्च संलक्ष्य तन् तदर्थसिद्ध्यै अनैषम्। अथापि यस्य कस्यचित् सकाशे एतस्य पुस्तकस्य विद्यमानभावः श्रूयते अनुमीयते वा तदपि ततश्चाहर्तुं न शक्यते। किन्तु मया तत्तद्दिशाभागात् अस्या दैवज्ञकामधेनोश्चत्वारि आदर्शपुस्तकानि अधिगतानि। तानि सर्व्वाणि मदीयेन पुस्तकेन सह संवाद्य सम्यग्विचारितानि। तेषु प्रायशो विसदृशानि पाठान्तराणि दृष्टानि। तेषामत्र कानिचित् पाठान्तराणि अधोलिखितानि। तान्यवलोकयद्भिः कैश्चिन्मनस्विभिरेतस्मिन् परिशोधने मम गाढपरिश्रमो ज्ञातुं शक्यते। एतस्य परिशोधने मया भूयान् परिश्रमः स्वीकृतः तथापि सर्व्वथा एतत् पुस्तकं परिशुद्धमिति वक्तुं न शक्यते। ततो यदत्रदोषं किञ्चिन्मम स्खलनं सुधीभिः समुद्भाव्यते तत्तैर्निजगुणेन परिशोधनीयम्॥

अपिचैतस्मिन् पुस्तके सिंहलाक्षरैर्मुद्रिते केषाञ्चित् स्वदेशीयानामेव तस्य प्रयोजनं भविष्यति। यथा तत् स्वदेशीयानां परदेशीयानां सर्व्वेषामपि

करणाङ्काः प्रकरणानि पृष्ठाङ्काः

दशमोऽध्यायः ५६–६५



एकादशोऽध्यायः ६५–७१



द्वादशोऽध्यायः ७१–७८



त्रयोदशोऽध्यायः ७८–८८



चतुर्दशोऽध्यायः ८८–९३



प्रकरणाङ्काः प्रकरणानि पृष्ठाङ्काः

पञ्चदशोऽध्यायः ९३–१०९



षोडशोऽध्यायः १०९–११२



सप्तदशोऽध्यायः ११२–११६



अष्टादशोऽध्यायः ११६–१२१



एकोनविंशोऽध्यायः



विंशोऽध्यायः १२९–१५३

# दैवज्ञकामधेनोः।

## शोधनपत्रम्।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | १२ | चिपत् | क्षिपेत् |
| ४ | ४ | स्युवर्जिराशयः | स्युर्वजिराशयः |
| ,, | १७ | गान्तममो | गान्तममो |
| ,, | १८ | विहिता | विहिताः |
| ५ | २० | विकालापिण्डं | विफलापिण्डं |
| ७ | २१ | सम्प्राप्तमगुङ्लं | सम्प्राप्तमङ्गुल |
| ,, | २३ | यगुङ्लं | यङ्गुलं |
| ८ | २ | सम्भेवत् | सम्भवेत् |
| १२ | ३ | युधादिर्कः | युधादिकं |
| १३ | १७ | त्वंष्टमादत | त्वष्टमादत |
| १८ | २२ | यमेत्कृष्ट | यत्मेत्कृष्ट |
| २३ | २० | सोभाग्य | सौभाग्य |
| २४ | ११ | क्षत्रियाञ्च | क्षत्रियाणाञ्च |
| २५ | ६ | स्यत्पापादाभेव | स्यात्पापादाभेव |
| २६ | ८ | ज्ञियपस्तु | ज्ञियस्तु |
| ,, | १८ | विद्धाधि | विद्धाति |
| ,, | २० | स्यञ्च | सस्यञ्च |
| २८ | ४ | पस्मामा | पञ्मासा |
| २९ | १ | तदप्यर्द्धोक्तं | तदप्यर्द्धोक्तं |
| ३० | २२ | महीयसीस्य | महीयस्य |
| ३१ | १९ | पत्नोञ्चत | पत्नोञ्चत |
| ३२ | २ | स्फुटग्रह | स्फुटग्रह |
| ,, | १९ | पन्द्रानं | पन्द्रानं |

| पृष्टम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | २० | श्रवणानिलगः | श्रवणानिलगः |
| ४७ | ११ | जलोद्भूता | जलोद्भूता |
| ,, | २५ | कुद्रभिष | कुद्भिष |
| ४७ | १७ | स्वार्त्ती | स्वाती |
| ,, | १६ | मित्रेभिनति | मित्रेभिनत्ति |
| ४८ | १६ | हितात्मनः | हितमात्मनः |
| ,, | २० | पश्चारणस्त्र | पश्चालश्च |
| ४६ | ७ | राहोश्चरितं | राहोश्चरितं |
| ,, | १० | ऋक्षो | ऋक्षाम |
| ५० | ४ | अथचैव | अथचैव |
| , | ५ | महान् योगोस्य उदाहृतः | महानस्ययोगानुदाहृतः |
| ५१ | १७ | प्राक कृत्वा | प्राग्वत्कृत्वा |
| ५२ | ३ | नातिविक्षेपः | नातिविक्षेपः |
| ,, | ११ | क्षुपे | क्षुण्णे |
| ,, | १७ | विश्लिष्यपुनर्द्वयेत् | विश्लिष्याप्यय चोपे |
| ,, | १८ | विमर्दनम् | विमर्दनम् |
| ५३ | १ | भेवत् | भवेत् |
| ५८ | २१ | निम्यप | निम्यपत्र |
| ,, | २२ | विभजेऽष्टमोजे | विभजेच्छिष्टमोजे |
| ,, | २४ | नतूर्द्ध | नतूर्द्ध |
| ५६ | १ | अभिष्ट | अभीष्ट |
| ,, | ८ | मासपः | मासतः |
| ६० | १८ | निर्यातो | निर्यातो |
| ६१ | ३ | राष्ट्रनृत्यनाम् | राष्ट्रनृत्यनाम् |
| ,, | १९ | धर्मात्रणे | धर्मात्रेण |
| ६२ | १६ | पत्सरा द्वितया | पत्सरद्वितया |
| ,, | १८ | दुर्भिक्षकर्तारः | दुर्भिक्षकर्तारः |
| ६५ | ३ | दोषपु | दोषेषु |
| ,, | १४ | देवकृतानभिहन्यानचरित | देवकृतानेहन्यां चरित |
| ६८ | २१ | दुर्दपर्मः | दुर्दर्पमः |

| पृष्ठम् | पाङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | २३ | विशोशकः | विशोशकः |
| ६६ | ३ | कुशोनुग्रहम | कुशोनुग्रह |
| ७० | १० | भंवत् | भंवेत् |
| ७३ | ११ | युतश्चद्रो | युतश्चन्द्रो |
| ,, | १७ | निसेविन | निषेविन |
| ७४ | १७ | समस्तग्रैह | समस्तग्रहैः |
| ७५ | १० | तास्त्रादेव | मस्तादेव |
| ८२ | १७ | मनङ्गनार्चित्तम् | मनङ्गनार्चितम् |
| ८२ | ३ | तनुपित | तनुपित्त |
| ८३ | १५ | पितज्वरं | पित्तज्वरं |
| ८५ | १७ | पितश्च | पित्तश्च |
| ८७ | ४ | मरणपीति | मरणभीति |
| ,, | १९ | र्कतनस्य | र्कतनयस्य |
| ८८ | २१ | विचरज्जन्मिनां | विचरज्जन्मिनां |
| ८६ | २ | वितनाशश्च | वित्तनाशश्च |
| ,, | १२ | दुखपरम्परा | दुःखपरम्परा |
| ६१ | १४ | चन्द्राक्तमाश्चारि | चन्द्राद्याश्चारि |
| ,, | १९ | व्ययधीर्धर्म्मगः | व्ययधीधर्म्मगः |
| ,, | १७ | स्वस्माद्दपचये | स्वस्मादुपचये |
| ,, | १८ | सुतधीर्धर्म्मं | सुतधीधर्म्मं |
| ६२ | ५ | निभनलाभाय | निधनलाभाय |
| ,, | ६ | प्रथभा | प्रथमा |
| ,, | १४ | सूर्य्याद्रिफा | सूर्य्याद्रिष्फा |
| ,, | १६ | लग्नापद | लग्नात्पद् |
| ६४ | १५ | चद्रे | चन्द्रे |
| ६७ | १२ | सञ्ञातो | सञ्जातो |
| ,, | २० | यमारार्कैः | यमारार्क्यैः |
| ६८ | २० | तत्रां | तत्र |
| ६६ | ७ | सर्खलितौ , | स्खलितौ |
| १०० | २० | तुङ्गधान | तुङ्गधाम |
| १०१ | १७ | दत्तर | दत्तर |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२२ | ४ | वृच | वृक्षां |
| १२३ | २ | सुतच | सुतक्षय |
| ,, | ५ | वाहनशास्त्रो | वाहनशास्त्रो |
| १२४ | १ | प्रप्तिः | प्राप्तिः |
| १२५ | १८ | स्त्रीभालो | स्त्रीलाभो |
| १२७ | ११ | जिघ्रेद्दत | जिघ्रते |
| १२९ | १ | नगहेष | गृहेषु |
| ,, | ५ | तर्य्यग् | तिर्य्यग् |
| ,, | १३ | मङ्गलद्रव्यानां | मङ्गलद्रव्याणां |
| १३० | १७ | ध्याणप्रकृति | घाणप्रकृति |
| १३२ | १८ | पुंसाकिवातङ्क | पुंसांकीटातङ्क |
| ,, | २४ | रुजमिहव | रुजमिह च |
| १३३ | ६ | प्रवदे तदा | प्रवदेत्तदा |
| ,, | २१ | विर्य्यये | विपर्य्यये |
| १३४ | ४ | उद्यर्क्षगतामरार्तवश्च | उदयाचिगतामरार्चितश्च |
| ,, | १४ | चरविलग्नतः | चरविलग्नगतः |
| ,, | १६ | प्रयातुन्नियमेन मासै | प्रयातुर्नियमेन मासैः |
| ,, | २२ | सुरस्थान | स्मरस्थान |
| १३६ | ५ | शुभायसासितां | शुभं वियासितां |
| १३७ | २ | चिद्रिपकस्तदा | चिद्रिपतस्तदा |
| ,, | १४ | साम्यगति | याम्यगति |
| १३८ | १२ | ज्यास्थित | कुज्यास्थित |
| १३९ | २ | प्रवेदन्नृप | प्रवदेन्नृप |
| ,, | ६ | हेते | हेतौ |
| ,, | १९ | प्रीतिस्वयाटेव | प्रीतिश्चयासेव |
| १४० | १ | पापाचेंग्र | पापक्षेत्रं |
| ,, | ३ | स्यादिचिरण | स्यादचिरेण |
| १४१ | १ | गृद्धकोश्वदेनाभुजगेन्द्रे | गृध्रकोलवदनाभुजगेन्द्रे |
| ,, | ३ | माधाम्रिताः | मर्धाम्रिताः |
| ,, | ५ | गात्रिभवां | गात्रभवां |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | ९ | कुष्यु | कुष्युं |
| ,, | १३ | रायकेनाड़्यास्तो | रायेकनाड्यास्पितो: |
| १४१ | १७ | द्विचतुर्य्येक | द्विचतुर्य्येकं |
| ,, | २० | निमसः | निमेषः |
| ,, | २१ | स्वेता | श्वेता |
| ,, | २२ | सभे | सचे |
| ,, | ,, | देहार्द्धेघ्री | देहार्द्धाङ्घ्री |
| १४२ | १ | माराहति | मारोहति |
| ,, | ३ | भङ्गमदन्यनदुःखते | भङ्गमदेनेनाग्निर्दिशेत |
| ,, | १० | रुद्रस्चवा | रुद्रथवाः |
| ,, | १६ | सकर्म्म | सत्कर्म्म |
| १४४ | १ | नावानास्थिन् | तावानास्मिन् |
| १४५ | १० | जलसश्रयौ | जलसंश्रयौ |
| ,, | १८ | देहभृतिभुवं | देहभृतिर्भुवं |
| १४६ | १ | जललुलितपानिः | जललुलितपाणिः |
| ,, | ३ | स्तापकाद्यौ | स्तोयकार्य्यौ |
| १४६ | १२ | ——— | इत्यूर्द्धजलादेशः |
| ,, | २३ | उज्जलाभाव | उज्जलाभावं |
| १५० | ५ | उदकत्रिपि | उदकत्रिभि |
| ,, | ८ | सलिल | सलिल |
| ,, | २३ | विभीतकस्य | विभीतकस्य |
| १५१ | ५ | सर्व्वपामेघ | सर्व्वेपामेव |
| १५१ | ६ | मुन्तुरोध | मुन्दुरोध |
| ,, | ८ | यवारि | वारि |
| ,, | १० | पञ्चक | पञ्चकं |
| १५२ | १६ | कतकफल | कतकफल |
| ,, | २३ | वर्गोतमे | वर्गोत्तमे |
| १५३ | ८ | सोम्य | सौम्य |
| १५५ | १८ | सूर्य्यद्रि | सुर्य्याद्रि |
| १५६ | २ | ठल्पस्योक्तः | संदस्योक्तः |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १७७ | २० | विभिरेवाहितं नस्याद् | विधिरेवहितस्तस्या |
| १७८ | २ | पापा न्म न्याय | पापात्मन्याय |
| १७८ | २ | विद्वद् | विदयितु |
| १८१ | २१ | तच्छुर्दि | तच्छर्दि |
| १८३ | १ | मांलिनम् | मीलनम् |
| ,, | २ | पित्तं | पीत |
| ,, | ५ | मेकादेशे | मेकादशे |
| ,, | १६ | फलगपम् | फल्गुपम् |
| १८४ | १३ | च्छार्दिनानाहोरो | च्छार्दिनानाहारो |
| १८५ | २ | कलहंसी | कलहसी |
| १८६ | ५ | स्नानं | स्नानञ्च |
| ,, | ९ | सप्तदीशे | सप्तदशे |
| ,, | २३ | तिलाविभिरमेः | तिलादिभिरघैः |
| १८७ | ४ | पभिरन्नेः | पभिरन्नैः |
| १८८ | ३ | रवतीयुजो | रेवतीयुजो |
| ,, | ४ | घचटतपादायगों: | कचटतपादायर्गोः |
| १८६ | १० | रन्ध्रारि | रन्ध्रारि |
| ,, | १५ | वृहष्पतिक्षत्रं | वृहस्पतिक्षेत्रं |
| ,, | १८ | नरवीरच्चसाङ्गली | करवीरच्चलाङ्गली |
| ,, | २० | कर्पपल्यन्तु | कर्णापल्यान्तु |
| ,, | ,, | मांसवाबाश्यिया | मांसलाचश्यिया |
| ,, | २४ | संद्या | संज्ञा |
| १८६ | २४ | दासानाम्च | दासानाञ्च |
| १९० | ३ | प्रहात् | गृहात् |
| ,, | १६ | नयस्तेवत | नयस्वेतत् |
| ,, | २१ | वदयरुद्रयोः | वैदयरुद्रयोः |
| ,, | २२ | पश्चाद्या | पश्चाद्या |
| ,, | २३ | सायपाद | सायनाद |
| १९१ | ३ | हेवं | द्वेत |
| ,, | ८ | बायसा | वर्षंशा |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २३३ | १४ | सन्येशः | सैन्येशः |
| २३४ | २३ | मधादया | मघादया |
| २३४ | १७ | तलगने | तल्लग्ने |
| २३७ | १९ | विदध्या | विदध्या |
| २३९ | १३ | दित्त्ववेव | दिश्ववेव |
| २४१ | ५ | मिपने | मिथुने |
| २४५ | १३ | चुस्तेन | चुस्तेन |
| ,, | २२ | भोमवारे | भौमवारे |
| २४६ | ११ | मपायने | मघायने |
| २४० | ३ | मघुप | मधुप |
| २५० | ९ | वाच्मि | चाह्नि |
| २५१ | २ | उध्ववक्रौ | उर्ध्ववक्रौ |



पातञ्जलदर्शनम्।श्रीरामानन्दयतिकृतमणिप्रभाऽऽख्यवृत्ति स० १
व्याकरणमिताक्षरा । श्रीमदन्नम्भट्टप्रणीता खण्डानि ७ ७
रत्नमञ्जरी । भाष्यार्थकौमुद्या प्रकाशेन च सहिता ख० ३ ३
भेदधिक्कारः व्याख्यासहितः श्रीमदप्पयदीक्षितकृत उपक्रमप-
राक्रमसहितः खण्डे २ २
बोधसारो नरहरिकृतः तच्छिष्यदिवाकरकृतटीकया स० ख० १०
ब्रह्मसूत्रदीपिका श्रीमच्छङ्करानन्दभगवद्विरचिता । २
दैवज्ञकामधेनुः अर्थात् प्राचीनज्योतिषग्रन्थः खण्डे ३ ३
श्रीमदणुभाष्यम् । श्रीश्रीवल्लभाचार्यविरचितम् ।
गोस्वामिश्रीपुरुषोत्तमजी महाराजविरचितभाष्यप्रकाशाख्य-
व्याख्यया समेतम् खण्डानि ६ ६
तत्त्वशेखरः । श्रीभगवल्लोकाचार्यप्रणीतः । तथा-तत्त्वत्रयचुलुक-
संग्रहः । कुमारवेदान्ताचार्यश्रीमद्वरदगुरुविरचितः । १


व्रजभूषण दास और कम्पनी

चांदनीचौक के उत्तर नई सड़क बनारस


